॥ श्रीगणेशाय नमः ॥

गुरुमण्डलग्रन्थमालाया अष्टादशपुष्पम्

# पद्मपुराणम्

पञ्चमं पातालखण्डम्

श्रीमन्महर्षिकृष्णद्वैपायनव्यासविरचितम्

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयम्भैरवम् ।
सिद्धौघं बटुकत्रयं पदयुगं दूतीक्रमं शाम्भवम् ॥
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

५, क्लाइव रो,
कलकत्ता।

वैक्रमाब्द: २०१५ | प्रथमं संस्करणम् १००० | खैस्ताब्द: १९५८

Gurumandal Series No. XVIII

# PADMA PURANAM

Shrimanmaharshi Krishna Dwaipayan Vedavyas

## PART III

5, CLIVE ROW,
Calcutta.

| Vikram Era | First Edition | Christian Era |
|---|---|---|
| 2015 | 5000 | 1958 |

# श्री पद्मपुराणस्थ पातालखण्डस्य

## विषयानुक्रमणिका





॥ समाप्तैषा पातालखण्डस्य विषयानुक्रमणिका ॥

शुभमस्तु

---

श्रीगणेशाय नमः ।

श्रीकुलदेवतायै नमः ।

श्रीगुरुचरणारविन्दाभ्यां नमः ।

# पाद्मपुराणम्

## अथ पञ्चमं पातालखण्डम्

### प्रथमोऽध्यायः

रामाश्वमेधप्रसङ्गारम्भः

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् । देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

ऋषय ऊचुः ।

श्रुतं सर्वं महाभाग ! स्वर्गखण्डं मनोहरम् । त्वत्तोऽधुना वदायुष्मञ्छ्रीरामचरितं हि नः

सूत उवाच ।

अथैकदा धराधारं पृष्टवान्भुजगोत्तमम् । वात्स्यायनो मुनिवरस्तथासौ श्रुतिनिर्मलाम् ॥

श्रीवात्स्यायन उवाच ।

शेषश्रुता कथास्त्वत्तो जगत्सर्गाद्याश्रिताः । भूगोलश्च खगोलश्च ज्योतिश्चक्रविनिर्णयः
महत्तत्त्वादि सृष्टीनां पृथक्तत्त्वविनिर्णयः । नाना राजचरित्राणि कथितानि त्वयाऽनघ
सूर्यवंशभवानां च राज्ञां चारित्रमद्भुतम् । तत्रानेकमहापापहरा रामकथा स्तुता
तस्य वीरस्य रामस्य हयमेधकथा श्रुता ।
संक्षेपतो मया त्वत्तस्तामिच्छामि सविस्तराम् ॥ ७ ॥
या श्रुता संस्मृता लोका महापातकहारिणी ।
चिन्तितार्थप्रदात्री च भक्तचित्तप्रतोषदा ॥ ८ ॥

शेष उवाच ।

धन्योऽसि द्विजवर्य ! त्वं यस्य ते मतिरीदृशी । रघुवीरपदद्वन्द्वमकरन्दस्पृहावती ॥
वदन्ति मुनयः सर्वे साधूनां सङ्गमं परम् । यस्मात्पापक्षयकरी रघुनाथकथा भवेत् ॥
त्वया मेऽनुग्रहः सृष्टो यद्रामः स्मारितः पुनः । सुरासुरकिरीटौघमणिनीराजिताङ्घ्रिकः ॥

रावणारिकथाम्भोधौ मशको मादृशः कियान् ।
यत्र ब्रह्मादयो देवा मोहिता न विदन्त्यपि ॥ १२ ॥
तथापि भो मया तुभ्यं वक्तव्यं स्वीयशक्तितः ।
पक्षिणः स्वगतिं श्रित्वा खे गच्छन्ति सुविस्तरे ॥ १३ ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । येषां वै यादृशी बुद्धिस्ते वदन्त्येव तादृशम्
रघुनाथसतीकीर्तिर्मद्बुद्धिनिर्मलीमसाम् । करिष्यति स्वसम्पर्कात्कनकं त्वनलो यथा

सूत उवाच ।

इत्युक्त्वा तं मुनिवरं ध्यानस्तिमितलोचनः ।
ध्यानेनालोकयाञ्चक्रे कथां लोकोत्तरां शुभाम् ॥ १६ ॥

गद्गदस्वरसंयुक्तो महाहर्षाङ्कुराङ्कुरः । कथयामास विशदां कथां दाशरथेः पुनः ॥

शेष उवाच ।

लङ्केश्वरे विनिहते देवशत्रुवरे । अप्सरोगणगन्धर्वाब्जचन्द्रम कान्तिहर्तरि ॥१८॥
सुराः सर्वे सुखं प्रापुरिन्द्रप्रभृतयस्तदा । सुखं प्रापाः स्तुतिं चक्रुर्दासवत्प्रणतिं गताः ॥
लङ्कायां च प्रतिष्ठाप्य धर्मयुक्तं विभीषणम् । सीतयासहितो रामः पुष्पकं समुपाश्रितः ।
सुग्रीवादनुगच्छद्भिर्वानरैरनुगतस्तदा । लङ्कामपश्यद्वसुधा ...

द्रष्टव्याशोकवनं यत्र सीतायाः स्थानं शुभं च ह ।
विश्रान्तस्तत्र वृत्तान्तं पुष्पिताशोकवृक्षवृन्दान् ॥ २२ ॥
... समीरितः ...
... विलोकयन् रामः प्रयात्पुरीं प्रति ॥ २३ ॥
... 

देवदुन्दुभिनिर्घोषाञ्छृण्वञ्छ्रोत्रसुखावहान् ।
यथैवाप्सरसां नृत्यैः पूज्यमानो रघूत्तमः ॥ २५ ॥

सीतायै दर्शयन्मार्गे तीर्थान्याश्रमवन्ति च । मुनींश्च मुनिपुत्रांश्च मुनिपत्नीः पतिव्रताः
यत्र यत्र कृतावासाः पूर्वं रामेण धीमता । तान्सर्वान्दर्शयामास लक्ष्मणेन समन्वितः
इत्येवं दर्शयंस्तस्यै रामोऽद्राक्षीत्स्वकां पुरीम् । तस्याः पुनः समीपे तु नन्दिग्रामं ददर्श ह
यत्र वै भरतो राजा पालयन्धर्ममास्थितः । भ्रातुर्वियोगजनितं दुःखचिह्नं वहन्बहु ॥२६

गर्तशायी ब्रह्मचारी जटावल्कलसंयुतः ।
कृशाङ्गश्छिद्रदुःखार्तः कुर्वन्रामकथां मुहुः ॥३०॥

यथान्नमपि नो भुङ्क्ते जलं पिबति नो मुहुः ।
उद्यन्तं सवितारं यो नमस्कृत्य ब्रवीति च ॥ ३१ ॥

जगन्नेत्र ! शृणुष्वामिन्द्रर मे दुःखं महत् । मदर्थे रामचन्द्रोऽपि जगत्पूज्यो वनं ययौ

सीतया सुकुमाराङ्ग्या सेव्यमानोऽटवीं गतः ।
या सीता पुष्पपर्यङ्के सुप्तमासाद्य दुःखिता ॥ ३३ ॥

या सीता रविसन्तापं कदापि प्राप नो सती । मदर्थे जानकी सा च महारण्यं भ्रमत्यहो
या सीता राजवृन्दैश्च न दृष्टा नयनैः कदा । सा सीता दृश्यते नूनं किरातैः कालरूपिभिः

या सीता मधुरं स्वन्नं भोजिता न बुभुक्षति ।
सा सीताऽद्य वनस्थानि फलानि प्रार्थयत्यहो ॥ ३६ ॥

इत्येवमन्वहं सूर्यमुपस्थाय वदत्ययम् । प्रातः प्रातर्महाराजो भरतो रामवल्लभः ॥ ३७ ॥
पश्चोच्यमानः सचिवैः समदुःखसुखैर्बुधैः । नीतिभिः शास्त्रनिपुणैरिति प्रोवाच सान्त्वयः ॥
अमात्या दुर्भगं मां किं प्रब्रूत पुण्यपापम् । यदर्थमग्रजो रामो वनं प्राप्यावसीदति ॥

दुर्भगस्य मम प्रस्याः पापमार्जनमादरात् ।
करोमि रामचन्द्राङ्घ्रि स्मारं स्मारं सुमन्त्रिणः ॥ ४० ॥

धन्या सुमित्रा सुनरी वीरसूस्पतिप्रिया ।
यस्यास्तनुजो रामस्य चरणौ सेवतेऽन्वहम् ॥४१ ॥

यत्र ग्रामे स्थितो नूनं भरतो भ्रातृवत्सलः । विलापं प्रकरोदुच्चैस्तं ग्रामं सन्ददर्श

इति श्रीपाद्मपुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रघुनाथस

भरतावासनन्दिग्रामदर्शनं नाम प्रथमोऽध्यायः ॥ १ ॥



## द्वितीयोऽध्यायः

### रामप्रहितस्य मारुतेर्भरतं प्रत्यागमनम्

शेष उवाच ।

अथ तद्दर्शनोत्कण्ठा विह्वलीकृतचेतसा । पुनःपुनःस्मृतो भ्राता भरतो धार्मिकाग्रणीः

उवाच च हनूमन्तं बलवन्तं समीरजम् । प्रस्फुरद्दशनज्योत्स्नाज्ञचन्द्रकान्तिहतान्धकः ॥

शृणु वीर हनूमंस्त्वं मद्गिरं भ्रातृनोदिताम् ।
चिरन्तनवियोगेन मद्गुणदीकृतविह्वलाम् ॥ ३ ॥

गच्छत्वं भ्रातरं वीर समीरणतनूद्भव ! । मद्वियोगदशां यस्य वपुषो विभ्रतं हठात् ।४।

यो वल्कलं परीधत्ते जटां धत्ते शिरोरुहे । फलानां भक्षणमपि न कुर्याद्विरहातुरः ॥

परस्त्री यस्य मातेव लोष्टवत्काञ्चनं पुनः । प्रजाः पुत्रानिवो रक्षेद्बान्धवो मम धर्मवित्

मद्वियोगजदुःखाग्निज्वालादग्धकलेवरम् । मदागमनसन्देशपयोवृष्ट्याऽभिसिञ्चतम् ॥७॥

सीतया सहितं रामं लक्ष्मणेन समन्वितम् । सुग्रीवादि कपीन्द्रैश्च रक्षोभिःसचिवैर्मयवैः

प्राप्तं निवेदय सुखात्पुष्पकासनसंस्थितम् ।
येन हि सोऽनुजः शीघ्रं सुखमेति मदागमात् ॥ ९ ॥

इति श्रुत्वा ततो वाक्यं रघुवीरस्य धीमतः । जगाम भरतावासं नन्दिग्रामं निदेशकृत्

गत्वा स नन्दिग्रामं तु मन्त्रिवृद्धैःसुसंयुतम् । भरतं भ्रातृविरहक्लिन्नं धीमान्ददर्श ह ॥

कथयन्तं मन्त्रिवृद्धान्रामचन्द्रकथानकम् । तदीयपदपाथोजमकरन्दसुनिर्भरः ॥ १२ ॥

नमश्चकार भर

दृष्ट्वा भरतः शीघ्रं प्रत्युत्थाय कृताञ्जलिः । स्वागतं चेतिहोवाच रामस्य कुशलं वद

इत्येवं वदतस्तस्य भुजो दक्षिणतोऽस्फुरत् ।
हृदयाच्च गतः शोको हर्षाश्रुपूरिताननः ॥ १५ ॥
विलोक्य तादृशं भूपं प्रत्युवाच कपीश्वरः ।
निकटे हि पुरःप्राप्तं विद्धि रामं सलक्ष्मणम् ॥ १६ ॥

रामागमनसन्देशामृतसिक्तकलेवरः । प्रापयत्स्वपुरं हि सहस्राण्यो न वेद्म्यहम् ॥१७॥
भगवन् मम तन्नास्ति यत्तुभ्यं दीयते मया । दासोऽस्मि जन्मपर्यन्तं रामसन्देशहारक ॥
वसिष्ठोऽपि गृहीत्वाऽर्घ्यं मन्त्रिवृद्धाः सुहृद्पिता । जग्मुस्ते रामचन्द्रं च हनुमद्दर्शिताऽध्वना

दृष्ट्वा दूरात्समायान्तं रामचन्द्रं मनोरमम् ।
पुष्पकासनमध्यस्थं स सीतं सहलक्ष्मणम् ॥ २० ॥

रामोऽपि दृष्ट्वा भरतं पादचारेण सङ्गतम् । जटावल्कलकौपीनपरिधानसमन्वितम् ॥
अमात्यान्भ्रातृवेषेण समवेषाञ्जटाधरान् । नित्यं तपःक्लिष्टतया कृशरूपान्ददर्श ह ॥

रामोऽपि चिन्तयामास दृष्ट्वा वै तादृशं नृपम् ।
अहो दशरथस्यायं राजराजस्य धीमतः ॥ २३ ॥

पुत्रः पदातिरायाति जटावल्कलवेषभृत् । न दुःखं तादृशं मेऽन्यद्वनमभ्यागतस्य हि ॥
यादृशं मद्वियोगेन चैतस्य परिवर्तते । अहो पश्यत मे भ्राता प्राणादिप्रियतमः सखा ॥

श्रुत्वा मां निकटे प्राप्तं मन्त्रिवृद्धैः सुहृद्वृतः ।
द्रष्टुं मां भरतोऽभ्येति वसिष्ठेन समन्वितः ॥ २६ ॥

इति प्रभुर्नरपतिः पुष्पकान्नमसोऽङ्गणात् । विभीषणहनूमद्भ्यां लक्ष्मणेन कृतादरः ॥
यानादपततराशु विपद्क्लिन्नमानसः । भ्रातर्भ्रातः पुनर्भ्रातर्भ्रातर्भ्रातर्वदन्मुहुः ॥ २८ ॥
दृष्ट्वा समुत्तीर्णमिमं रामचन्द्रं सुरैर्युतम् । भरतो भ्रातृविरहक्लिन्नं धीमान्ददर्श ह ॥
हर्षाश्रूणि प्रमुञ्चंश्च दण्डवत्प्रणनाम ह । रघुनाथोऽपि तं दृष्ट्वा दण्डवत्पतितं भुवि

उत्थाप्य जगृहे दोर्भ्यां हर्षलोकसमन्वितः ॥ ३० ॥

उत्थापितोऽपि हि भृशं नोदतिष्ठद्रुदन्मुहुः । रामचन्द्रपदाम्भोजग्रहणासक्तबाहुभृत् ॥

विचित्रवर्णध्वजभा चित्रिताखिलस्वाङ्गणाः ।
मेघागमे धनुरिव पश्यन्त्वेव वलीमुखाः ॥ ५ ॥
प्रतिगेहं तु लोकानां कारयन्त्वगरूक्षणम् ।
यद्धूमं वीक्ष्य शिखिनो नृत्यं कुर्वन्ति लीलया ॥ ६ ॥

हस्तिनो मम शैलाभा नाधोरण सुयन्त्रिताः । विचित्रयन्तु बहुशो गैरिकाद्युपधातुभिः
वाजिनश्चित्रिता भूयःसुशोभन्तु मनोजवाः । यद्वेगवीक्षणादेव गर्वं त्यजति स्यहयः ॥
कायाःसहस्रशोरम्याःसर्वाभरणभूषिताः । गजोपरि समारूढा मुक्ताभिर्विकिरन्तु च
ब्राह्मण्यःपात्रहस्ताश्च दूर्वां हारिद्रसंयुताः । सुवासिन्यो महाराजं रामं नीराजयन्तुताः
कौसल्या पुत्रसंयोगसन्देशविधुरा सती । हर्षं प्राप्नोतु सुहृद्या तद्वीक्षणसुलालसा ॥
इत्येवमादि रचनाः पुरशोभाविधायिकाः । करोतु जनता हृष्टा रामस्यागमनं प्रति ॥

शेष उवाच ।

इति श्रुत्वा ततो वाक्यं सुमुखो मन्त्रवित्तमः । प्रययौ नगरीं कर्तुं कृतकौतुकतोरणाम्
गत्वाऽथ नगरीं तां वै मन्त्री तु सुमुखाभिधः ।
व्यापयामास लोकानां रामागममहोत्सवम् ॥ १४ ॥

लोकाःश्रुत्वा पुरीं प्राप्तं रघुनाथं सुहर्षिताः । पूर्वं तदीयविरहत्यक्तभोगसुखाश्रयः ॥१५
ब्राह्मणा वेदसम्पन्नाःपवित्रा दर्भपाणयः । धौतोत्तरीय वलिता जग्मुःश्रीरघुनायकम्
क्षत्रिया ये शूरतमा धनुर्बाणधरा वराः । सङ्ग्रामे बहुशो वीरा जेतारो ययुरप्यसुम् ॥
वैश्या धनसमृद्धाश्च मुद्राशोभितपाणयः । शुभ्रवस्त्र परीधाना अभिजग्मुर्नरेश्वरम् ॥
शूद्रा द्विजेषु ये भक्ताः स्वीयाचारसुनिष्ठिताः ।
वेदाचाररता ये वै तेऽपि जग्मुः पुरीपतिम् ॥१६॥
ये ये वृत्तिकरा लोकाःस्वे स्वे कर्मण्यधिष्ठिताः ।
स्वकं वस्तु समादाय ययुः श्रीराममूपतिम् ॥ २० ॥

इत्थं भूपतिसन्देशात्प्रमोदाप्लवसंयुताः । नानाकौतुकसंयुक्ता आजग्मुर्मनुजेश्वरम् ॥
रघुनाथोऽपि सकलैर्वृतैःस्वस्ववाहनैः । परीतःप्रविवेशोच्चैःपुरीं रचितमोहनाम् ॥

प्लवङ्गाः प्लवनैर्युक्ता आकाशपथचारिणः ।
स्वस्वशोभा परीताङ्गाश्चानुजग्मुःपुरोत्तमम् ॥ २३ ॥
पकादवरुह्याशु नरयानमथारुहत् । सीतयासहितो रामःपरिवारसमावृतः ॥ २४ ॥
ोध्यां प्रविवेशाथ कृतकौतुकतोरणाम् । हृष्टपुष्ट जनाकीर्णामुत्सवैःपरिभूषिताम्
णापणवभेर्यादि वादित्रैराहतैर्भृशम् । शोभमानःस्तूयमानःसूतमागधवन्दिभिः ॥२६
राघव रामेति जय सूर्य कुलाङ्कुर । जय दाशरथे देव जयताल्लोकनायक ! ॥२७॥
इति शृण्वञ्छुभां वाचं पौराणां हर्षिताङ्गिनाम् ।
रामदर्शनसञ्जात पुलकोद्भेदशोभिनाम् ॥ २८ ॥
विवेश वरं मार्गं रथ्यावत्वरभूषितम् । चन्दनोदकसंसिक्तं पुष्पपल्लवसंयुतम् ॥२९॥
तदा पौराङ्गनाःकाश्चिद्गवाक्ष विलमाश्रिताः ।
रघुनाथस्वरूपेक्षा आतकामा अथाब्रुवन् ॥ ३० ॥

पौराङ्गना ऊचुः ।

धन्या अभूवन्यत भिल्लकन्या वनेषु या राममुखारविन्दम् ।
स्वलोचनेन्दीवरकैरथापिबन्स्वभाग्यसञ्जातमहोदया द्राक् ॥ ३१ ॥
धन्यं मुखं पश्यत पौरधाम्न श्रीरामदेवस्य सरोजनेत्रम् ।
यद्दर्शनं धातृमुखाःसुरा अपि प्रापुर्महद्भाग्ययुता वयं त्वहो । ३२ ॥
एतन्मुखं पश्यत चारुहासं किरीटमशोभि भिलोत्तमाङ्गम् ।
बन्धूकधिक्कारलसच्छविप्रदं दलच्छदं विस्तृतमुच्चनासम् ॥ ३३ ॥
इति गदितवतीस्ताःस्नेहभारेण रामो ललितरलसदृशैर्नेत्रपातैर्निरीक्ष्य ।
मिथिलगुरुतनूजप्रेमभारं मृलोके जननिगृहमियेव प्रोषिताङ्गिन दृष्टः ॥ ३४ ॥
इति श्रीपाद्मेमहापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
रघुनाथस्य पुरप्रवेशनं नाम तृतीयोऽध्यायः ॥ ३ ॥

———

# चतुर्थोऽध्यायः

## रामवियोगाद्राममातुर्विलापकरणम्

वात्स्यायन उवाच

भुजगाधीश्वरेशान! धराभारधरक्षम ! । शृण्वेकं संशयं मह्यं कृपया कथयस्व तम् ॥१॥
रघुनाथस्य गमनं वनंप्रति यदाह्यभूत् । तदा प्रभृति देहेन स्थिता शून्येन चेतसा ॥२॥
तद्विप्रयोगविधुरा कृशदेहातिदुःखिता । सुमुखान्मन्त्रिणःश्रुत्वा रघुनाथं समागतम् ॥३
कथं जहर्ष किमभूत्कीदृशं तत्र चिह्नितम् । रामचन्द्रस्य सन्देशहर्तारं किमुवाच सा ॥
एतं मे संशयं छिन्धि रघुनाथ गुणोदयम् । यथावच्छृण्वते मह्यं कथयस्व प्रसादतः ॥

शेष उवाच ।

साधु पृष्टं महाभाग द्विजवर्य पुरस्कृत । तन्मे निगदितःसाक्षाच्छृणुष्वैकमनाःकिल ॥६॥
सा वै तद्वदनाम्भोजच्युतं रामागमामृतम् ।
पीत्वा पीत्वा मुमुदाहो स्थगिताङ्गेन विह्वला ॥ ७ ॥
किं मे स्वप्नो विमूढायाः किं वा भ्रमकरं वचः । मम वै मन्दभाग्यायाःकथं रामेक्षणंपुनः
बहुना तपसा कृत्वा प्राप्तोऽयं वै सुतःशिशुः । केनचिन्मम पापेन विप्रयोगं गतःपुनः ॥
सुमन्त्रिन्कुशली रामःसीता लक्ष्मणसंयुतः। कथं मां स्मरते वीरो वनचारीसुदुःखिताम्
इति सा विललापोच्चै रघुनाथस्मृतिं गता ।
न विवेद निजं किञ्चित्परकीयं विमोहिता ॥ ११ ॥
सुमुखोऽपि तथा दृष्ट्वा दुःखितां मातरं भृशम् ।
वीजयामास वासोभिःसंज्ञमाप च सा पुनः ॥ १२ ॥
उवाच जननीं सौम्यं वचो हर्षकरं मुहुः । रघुनाथागमस्मापहर्षा तां व्यदधात्पुनः ॥
मातर्विद्धि गृहं प्राप्तं रघुनाथं सलक्ष्मणम् ।
सीतया सहितं पश्य वाशीर्भिरभियुङ्क्ष्व च ॥ १४ ॥

तथ्यं वचःश्रुत्वा सुमुखेन प्रभाषितम् । यादृशं हर्षमापेदे तादृशं वेद्म्यहं न हि ॥
ाय चाजिरेप्राप्ता रोमाञ्चिततनूरुहा । हर्षविह्वलिनाद्भूयश्रु मुञ्चन्ती राममैक्षत ॥

तावत्सरामो राजेन्द्रो नरयानमधिश्रितः ।
प्राप्तःस्वमातुर्भवनं कैकेय्याःसुनयाःपुरः ॥ १७ ॥
कैकेय्यपि त्रपाभारनम्रा रामं पुरःस्थितम् ।
नोवाच किंचिन्महतीं चिन्तां प्रापवती मुहुः ॥ १८ ॥
सूर्यवंशध्वजो रामो मातरं वीक्ष्य लज्जिताम् ।
उवाच सान्त्वयंस्तां च वाक्यैर्विनयमिश्रितैः ॥ १९ ॥

र्मया वनं गत्वा सर्वमाचरितं तथा । अधुना करवै किं वा त्वदाज्ञातो जनन्यहो
। न्यूनं कृतं नास्ति कथं मां नेक्षसे पुनः । आशीर्भिरभिनन्द्यैनं भरतं मां च वीक्ष्य
: श्रुत्वापि तद्वाक्यं सा नम्रवदनाऽनघ । शनैः शनैः प्रत्युवाच राम गच्छस्वमालयम्

रामोऽपि श्रुत्वा वचनं जनन्याः पुरुषोत्तमः ।
नमस्कृत्य ययौगेहं सुमित्रायाः कृपानिधिः ॥ २३ ॥
सुमित्रापुत्र सहितं रामं दृष्ट्वा महामनाः ।
. चिरंजीव चिरंजीव ह्याशीर्भिरिति चाभ्यधात् ॥ २४ ॥

तुघ्नरामभद्रोऽपि चरणौ प्रणिपत्य च । परिष्वज्य मुदायुक्तो जगाद वचनं पुनः ॥
ार्गे ममस्नात्रा केनापि न कृतं तथा । यथायमकरोद्धीमान्मम दुःखापनोदनम् ॥
वणेन हृता सीता मयायत्प्राप्यते पुनः। मातस्तन्सर्वमाविद्धि लक्ष्मणस्य विचेष्टितम्
ामाशिषमागृह्य शिरसा वै सुमित्रया । निजमातुश्च भवनं प्रययौ विबुधेश्वरः ॥
तरं वीक्ष्य दुःखितां निजदर्शनलालसाम् । त्वरयानाद्वचस्त्याशु चरणावग्रहीद्धरिः ॥
ता मद्दर्शनोत्कण्ठा विह्वली कृतमानसा । परिष्वज्य परिष्वज्य रामंमुदमवाप सा
रीरे रोमहर्षोऽभूद्गद्गदावागमूत्तदा । हर्षाश्रूणि तु लोचनानि प्रयान्द्र प्रापुरापदात् ॥
ननीं वीक्ष्य विनयी तादृगवस्थां कृशाम् । कराकन्दापदाभरणरहितां विप्रतीतनुम् ॥

किंञ्चिल्लज्जासंमानयुक्ता ह्यार्द्रौ तौ च शोकभाक् ।

दुःखस्य समयो नायमिति मत्वा जगाद ताम् ॥ ३३ ॥

श्रीराम उवाच ।

मातर्मया त्वच्चरणौ चिरकालं न सेवितौ । ततःक्षमस्वापराधं भाग्यहीनस्य वै मम
ये पुत्रा मातापित्रोर्न शुश्रूषायां समुत्सुकाः ते मन्तव्याः परामातःकीटकारेतसोभवाः

किं कुर्वे जनकाज्ञातो गतो वै दण्डकं वनम् ।
तत्रापि त्वत्कृपापाद्गुत्तीर्णोऽस्मि दुःखसागरम् ॥ ३६ ॥
रावणेन हृता सीता लङ्कायां गमिता पुनः ।
त्वत्कृपातो मया लब्धा तं हत्वा राक्षसेश्वरम् ॥ ३७ ॥

सीतेयं त्वच्चरणयोःपतिता वै पतिव्रता । सम्भावयाशु चकितां त्वत्पादार्पितमानसाम्

इति श्रुत्वा तु तद्वाक्यं पादयोः पतितां स्नुषाम् ।
आशीर्भिरभियुज्यैनां बभाषे तां पतिव्रताम् ॥ ३८ ॥

सीते स्वपतिना सार्द्धं चिरं विलस भामिनि । पुत्रौ प्रसूय च कुलं स्वकं पावय पावने !
त्वत्सदृश्यः पतिपराः पतिदुःखसुखानुगाः । भवन्ति दुःखभागिन्यो न हि सत्यं जगत्त्रये

विदेहपुत्रि ! स्वकुलं त्वया पावितमात्मना ।
रामपादाब्जयुगलमनुयान्त्या महावने ॥ ४२ ॥
किं चित्रं वत्सुमांसस्तु वैरिकोटिप्रभञ्जनाः ।
येषां गेहे सती भार्या स्वपतिप्रियवाञ्छिका ॥ ४३ ॥
इत्युक्त्वा रघुनाथस्य भार्यामञ्चितलोचनाम् ।
तूष्णीं बभूव हृपिता प्रहृष्टस्वतनूरुहा ॥ ४४ ॥

अथ भ्राताऽस्य भरतःपित्रादत्तं निजं महत् । राज्यं निवेदयामास रामचन्द्राय धीमते
मन्त्रिणस्ते प्रहृष्टाङ्गा दैवज्ञान्मन्त्रकोविदान् । आहूय सुमुहूर्तं ते पप्रच्छुःपरमादरात् ॥
शुभे मुहूर्ते सुदिने शुभनक्षत्रसंयुते । अभिषेकं महाराज्ये कारयामासुरुद्यताः ॥४७॥

सप्तद्वीपवतीं पृथ्वीं व्याघ्रचर्मणि सुन्दरे ।
लिखित्वोपरि राजेन्द्रो महाराजोऽधितस्थिवान् ॥ ४८ ॥

द्विजादेव साधूनां मनांसि प्रमुदं ययुः । दुष्टानां चैव सोऽत्यानिशमयत्परतापिनाम् ।
स्त्रियस्तु पतिभक्ताश्च पतिव्रतपरायणाः । मनसाऽपि कदा पापं नाचरन्ति जना मुं

दैत्या देवास्तथा नागा यक्षासुरमहोरगाः ।
सर्वे न्यायपथे स्थित्वा रामाज्ञां शिरसा दधुः ॥ ५१ ॥

रोपकरणेयुक्ताःस्वधर्मसुखनिर्वृताः । विद्याविनोदगमिता दिनरात्रि क्षणाःशुभाः ।

यातोऽपि मार्गसंस्थानां वलान्नाहरते महान् ।
वासांस्यपि तु सूक्ष्माणि तत्र चौरकथा न हि ॥ ५३ ॥
धनदो ह्यर्थिनां रामः कारुण्यश्च कृपानिधिः ।
भ्रातृभिःसहितो नित्यं गुरुदेवस्तुतिं व्यधात् ॥ ५४ ॥

इति श्रीपाद्मे महापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे रघुवरस्य राज्याभिषेको नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः

### सर्वदेवकृतरामस्तुतिः ।

शेष उवाच ।

अथाभिषिक्तं रामं तु तुष्टुवुःप्रणताःसुराः । रावणाभिधदैत्येन्द्रवधहर्षितमानसाः ॥

देवा ऊचुः ।

जय दाशरथे ! सुरार्तिहर जय दानववंशदाहक ! ।
जय देववराङ्गनागणग्रहणव्यग्रकरारिदारक ! ॥ २ ॥
तव यद्भुजेन्द्रनाशनं कथयो वर्णयितुं समुत्सुकाः ।
प्रलये जगतां ततीः पुनर्ग्रससे त्वं भुवनेश ! लीलया ॥ ३ ॥
जय जन्मजरादिदुःखकैः परिमुक्त प्रबलोदरोदर ! ।

जय धर्मकरान्वयाम्बुधौ कृतजन्मन्नजरामराच्युत ॥ ४ ॥
तव देववरस्य नामभिर्बहुपापा अपि ते पवित्रिताः ।
किमसाधु द्विजवर्य पूर्वकाः सुतनुं मानुषतामुपागताः ॥ ५ ॥
हर विरिञ्चिनुतं तव पादयोर्युगलमीप्सितकाम समृद्धिदम् ।
हृदि पवित्रयवादिकचिह्नितैःसुरचितं मनसा स्पृहयामहे ॥ ६ ॥
यदि भवान्नवधात्यमयं भुवो मदनमूर्तितिरस्कारकान्तिभृत् ।
सुरगणा हि कथं सुखिनःपुनर्भव भवन्ति घृणामय पावन ॥ ७ ॥
यदा यदा नो दनुजा हि दुःखदास्तदा तदा त्वं भुवि जन्मभाग्भवेः ।
अजोऽव्ययोऽप्यीश्वरोऽपि सन्विभो स्वमायमास्थाय निजं निजार्चितः ॥
मृतसुधा सदृशैरघनाशनैःसुचरितैरवकीर्य महीतलम् ।
भमनुजैर्गुणांस्त्रिभिरीडितः प्रविश चाशु पुनर्हि स्वकं पदम् ॥ ९ ॥
अनादिराद्योऽजररूपधारी हारी किरीटी मकरध्वजाभः ।
जयं करोतु प्रसभं हतारिःस्मरारिसंसेवितपादपद्मः ॥ १० ॥
त्वा ते सुराःसर्वे महेन्द्रप्रमुखा मुहुः । प्रणेमुरवनावेव प्रीणिता रघुनायकम् ॥
इति स्तुत्यातिसंहृष्टो रघुनाथो महायशाः ।
प्रोवाच तान्सुरान्वीक्ष्य प्रणतान्नतकन्धरान् ॥ १२ ॥

श्रीराम उवाच ।

वृणुतमे यूयं वरं किञ्चित्सुदुर्लभम् । यं कोऽपि देवो दनुजो न यक्षःप्राप सादरः

सुरा ऊचुः ।

भगवन्तःसर्वं प्राप्तमस्माभिरुत्तमम् । यदयं निहतःशत्रुरस्माकं तु दशाननः ॥
ऽसुरोऽस्माकं यार्था यदिदधाति भोः । तदा तदेति कर्तव्यमेतावद्वैरिनाशनम्
तथेत्युक्त्वा पुनर्धीरः प्रोवाच रघुनन्दनः ।

श्रीराम उवाच ।

ते मद्वाक्यमादरेण समन्विताः । भवत्कृतं मदीयैर्वै गुणैर्ग्रथितमद्भुतम् ॥

तोत्रं पठिष्यति मुहुःप्रातर्निशि सन्नरः । तस्य वैरि पराभूतिर्न भविष्यति दारुणा
न दारिद्र्यसंयोगो न च व्याधिपराभवौ । मदीय चरणद्वन्द्वे भक्तिस्तेषां तु भूयसी

भविष्यति शुभायुक्ते स्वान्ते पुंसां सु पाठतः ।
इत्युक्त्वा सोऽभवत्तूष्णीं नरदेवशिरोमणिः ॥ २० ॥
सुराः सर्वे प्रहृष्टास्ते ययुर्लोकं स्वकं स्वकम् ।
रघुनाथोऽपि भ्रातॄंस्तान्पालयंस्तातवत् सुधान् ॥ २१ ॥
प्रजाः पुत्रानिव स्वीयाँल्लालयँल्लोकनायकः ।
यस्मिञ्छासति लोकानां नाकालमरणं नृणाम् ॥ २२ ॥

न रोगादि पराभूतिर्हेतु च महीयसी । नेतिःकदापि दृश्येत वैरिजं भयमेव च ॥
वृक्षाःसदैव फलिनो मही भूयिष्ठधान्यका । पुत्रपौत्रपरीवारसनाथीकृत जीवनाः ॥
कान्तासंयोगजसुखैर्निरस्त विरहक्लमाः । नित्यं श्रीरघुनाथस्य पादपद्मकथोत्सुकाः ॥
कदापि परनिन्दासु वाचस्तेषां भवन्ति न । कायोऽपि कदा पापं नाचरन्ति मनस्यहो
रघुनाथ कराघात दुःखशङ्काभिशंसिनः । सीतापति मुखालोक निश्चली भूतलोचनाः
लोका बभूवुः सततं कारुण्यपरिपूरिताः । राज्यं प्राप्तमसापत्नं सम्बुद्धयत्नयाहृतम् ॥
ऋषिभिर्दृष्टपूर्वैश्च रम्यं हाटकभूषणैः । सम्पुष्टमिष्टपूर्तानां धर्माणां नित्यकर्तृभिः ॥
सदासम्पन्नसस्यं च सुवस्सुक्षेमसंयुतम् । सुदेशं सुप्रजःस्वस्थं सुतृणं बहुगोधनम् ॥
देवतायतनानां च राजिभिःपरिराजितम् । सुपूर्णा यत्र वै ग्रामाःसुवित्तर्द्धि विराजिताः

सुपुष्पकृत्रिमोद्यानाः सुस्वादु फलपादपाः ।
सपद्मिनीककासारा यत्र राजन्ति भूमयः ॥ ३२ ॥
सदम्भा निम्नगा यत्र न यत्र जनता क्वचित् ।
कुलान्येव कुलीनानि वर्णानां न धनानि च ॥ ३३ ॥

विभ्रमो यत्र नारीषु न विद्वत्सु च कर्हिचित् । नद्यःकुटिलगामिन्यो न यत्र विषयेप्रजाः
युक्ताःक्षपा यत्र बहुलेषु न मानवाः । रजोयुजःस्त्रियो यत्र नाधनं बहुला नराः ॥
यत्रास्ति जनो नैव च भोजने । अनयःस्यन्दनो यत्र न चैव राजपूरुषः ॥

ङःपरशु कुद्दाल घालव्यजनराजिषु । आतपत्रेषु नान्यत्र क्वचित्कोधोपरोधजः ॥
यत्राक्षिकवृन्देभ्यःक्वचिन्न परिदेवनम् । आक्षिका एव दृश्यन्ते यत्र पाशकपाणयः
व्यथार्ता जलेष्वेव स्त्रीमध्या एव दुर्बलाः । कठोरहृदया यत्र सीमन्तिन्यो न मानवाः

औपधेष्वेव यत्रास्ति कुष्ठयोगो न मानवे ।
वेधो यत्र सुरत्नेषु शूलं मूर्तिकरेषु वै ॥ ४० ॥
कम्पःसात्त्विकसाधोत्थो न भयात्क्वापि कस्यचित् ।
सञ्ज्वरः कामजो यत्र दारिद्र्यं कलुषस्य च ॥ ४१ ॥

भर्त्य सदैवस्य सुकृते न च वस्तुनः । इभा एव प्रमत्ता वै युद्धे वीव्यो जलाशये ॥

दानहानिर्गजेष्वेव तीक्ष्णा एव हि कण्टकाः ।
बाणेषु गुणविश्लेषो बन्धोक्तिःपुस्तके दृढा ॥ ४३ ॥

त्यागः खलेष्वेव न च वै स्वजने जने । तं देशं पालयामास लालयँल्लालिताःप्रजाः
संस्थापयन्देशे दुष्टे दण्डधरोपमः । एवं पालयतो देशं धर्मेण धरणीतलम् ॥
। च व्यतीयुर्वै वर्षाण्येकादश प्रभोः । तत्र भीचजनाच्छ्रुत्वा सीतायाः अपमाननम्
च निन्दांजकतस्तां तत्याज रघूद्वहः । पृथ्वीं पालयमानस्य धर्मेण नृपतेस्तदा ॥
विरहितामेकां निदेशेन सुरक्षिताम् । कदाचित्संसदोमध्ये ह्यासीनस्य महामते ॥

आजगाम मुनिश्रेष्ठःकुम्भोत्पत्तिर्मुनिर्महान् ।
गृहीत्वाऽर्घ्यं समुत्तस्थौ वसिष्ठेन समन्वितः ॥ ४६ ॥

भिर्महाराजो वार्धिशोषकमागतम् । स्वागतेन सुसम्भाव्य पप्रच्छ तमनामयम् ॥

सुखोपविष्टं विश्रान्तं वमावे रघुनन्दनः ॥ ५० ॥

श्रीपाद्मेमहापुराणे पञ्चमेपातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधेऽगस्त्य
समागमो नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

## रामेणागस्त्यागतकरणम् ।

शेष उवाच ।

इत्थं स्वागतसन्तुष्टं ब्रह्मचर्यं तपोनिधिम् । उवाच मतिमान्वीरः सर्वलोकगुरुर्मुनिम् ॥१॥

श्रीराम उवाच ।

स्वागतं ते महाभाग ! कुम्भयोने तपोनिधे । त्वद्दर्शनेन सर्वे वै पावितास्सकुटुम्बकाः

कश्चिन्मतिस्ते वेदेषु शास्त्रेषु परिवर्तते । त्वत्तपो विघ्नकर्ता वै नास्ति भूमण्डले क्वचित्

लोपामुद्रा महाभाग ! या च ते धर्मचारिणी ।
यस्याः पतिव्रता धर्मात्सर्वं भवति शोभनम् ॥ ४ ॥

अपि शंस महाभाग धर्ममूर्ते कृपानिधे । अलोलुपस्य किं कार्यं करवाणि मुनीश्वर ! ॥

त्वत्तपो योगतः सर्वं भवति स्वेच्छया यद्‌ ।
तथापि मयि कृत्वैव कृपां शंस मुनीश्वर ॥ ६ ॥

शेष उवाच ।

इत्युक्तो लोकगुरुणा राजराजेन धीमता । उवाच रामं लोकेशं विनीततरमायया ॥७॥

अगस्त्य उवाच ।

स्वामिस्तव सुदुर्दर्शं दर्शनं देवतैरपि । मत्वा समागतं विद्धि राजराज ! कृपानिधे ! ॥

हतस्त्वया रावणाख्यस्त्वसुरो लोककण्टकः ।
दिष्ट्याऽद्य देवाःसुखिनो दिष्ट्या राजा विभीषणः ॥ ६ ॥

राम त्वद्दर्शनान्मेऽद्य गतं वै दुष्कृतं किल । सम्पूर्णो मे मनःकोश आनन्देन सुरोत्तमम्

इत्युक्त्वा स बभूवासु तूष्णीं कुम्भसमुद्भवः । रामसन्दर्शनाह्लादविह्वलीकृतमानसः ॥

रामः पप्रच्छ तं भूयो मुनिं ज्ञानविशारदम् ।
लोकातीतं भवद्भावि सर्वं जानासि सर्वतः ॥ १२ ॥

मुने कथय मे सर्वं पृच्छतो हि सुविस्तरम् ।
कोऽसौ मया हतो यो हि रावणो विबुधार्दनः ॥ १३ ॥
कुम्भकर्णोऽपि कस्त्वेष का जातिर्वै दुरात्मनः ।
देवो दैत्यः पिशाचो वा राक्षसो वा महामुने ! ॥ १४ ॥
सर्वमाख्याहि सर्वज्ञ ! सर्वं जानासि विस्तरात् ।
अतः कथय मे सर्वं कृपां कृत्वा ममोपरि ॥ १५ ॥
इति श्रुत्वा ततो वाक्यं कुम्भजन्मा तपोनिधिः ।
यत्पृष्टं रघुराजेन प्रवक्तुं तत्प्रचक्रमे ॥ १६ ॥
राजन्सृष्टिकरो ब्रह्मा पुलस्त्यस्तत्सुतोऽभवत् ।
ततस्तु विश्रवा जज्ञे वेदविद्याविशारदः ॥ १७ ॥
तस्य पत्नीद्वयं जातं पातिव्रत्यचरित्रभृत् ।
एका मन्दाकिनी नाम्नी द्वितीया कैकसी स्मृता ॥ १८ ॥
पूर्वस्यां धनदो जज्ञे लोकपालविलासभृत् ।
योऽसौ शिवप्रसादेन लङ्कावासमकारयत् ॥ १९ ॥

विद्युन्मालिसुतायां ॥ पुत्रत्रयमभून्महत् । रावणःकुम्भकर्णश्च तथा पुण्यो विभीषणः राक्षस्युदरजन्मत्वात्सन्ध्यासमयसम्भवात् । द्वयोरधर्मनिपुणा मतिरासीन्महामते ! ॥ एकदा ॥ विमानेन पुष्पकेण सुशोभिना । काञ्चनीयोपकल्पेन किङ्किणीजालमालिना आरुह्य पितरं द्रष्टुं प्रायाच्छोभासमन्वितः । धनदो संस्तुतो भूत्वा नानारत्नविभूषणः आगत्य पित्रोश्चरणे पतित्वा विनयात्मजः । हर्षविह्वलितात्मा च रोमाञ्चिततनूरुहः ॥ उवाच मेऽद्य सुदिनं महाभाग्य ! फलोदयः । यन्मे युष्मत्पदौ दृष्टौ महापुण्यददर्शनौ ॥

इत्यादिभिः स्तुतिपदैः स्तुत्वाऽगान्मन्दिरं स्वकम् ।
पितरावपि संहृष्टौ पुत्रस्नेहाद् बभूवतुः ॥ २६ ॥
तं दृष्ट्वा रावणो धीमानगाद् निजमातरम् ।
कोऽयं पुमान्सुरो वाऽथ यक्षो वाऽथ नरोत्तमः ॥ २७ ॥

ऽसौ मम पितुःपार्श्वे संनिवेश्य गतःपुनः। महामायनिधिःस्थीयैर्गणैःसु
नेदं मपसा लब्धं विमानं वायुवेगभृत्। उद्यानारामवल्ल्यादिविलासस्था

शेष उवाच।

इति वाक्यं समाकर्ण्य जननी रोषविह्वला।
उवाच पुत्रं विमनाः किञ्चिन्नेत्रविकारिणी ॥ ३० ॥
हे पुत्र! शृणु मद्वाक्यं बहुशिक्षासमन्वितम्।
एतस्य जन्मकर्मादि विचारय तुराधिकम् ॥ ३१ ॥
सपत्न्या मम कुक्षिस्थं विधानं समुपस्थितम्।
येन स्वमातुर्विमलं कुलमुज्ज्वलितं महत् ॥ ३२ ॥
त्वं तु मत्कुक्षिजः कीटः पापः स्वोदरपूरकः।
यथा खरः स्वकं भारं जानाति न च तद्गुणम् ॥ ३३ ॥
तथा त्वं लक्ष्यसे ज्ञानी शयनासनभोगवान्।
सुप्तो मत्तः कश्चित्तु भ्रष्ट इत्येव तव सम्भवः ॥ ३४ ॥
येन तपसा लब्धं शिवसन्तोषकारिणा। लङ्कायास्तो मनोवेगं विमानं राउ
सुधन्या जननी त्वस्य सुभाग्या सुमहोदया।
यस्याः पुत्रो निजगुणैर्लब्धवान्महतां पदम् ॥ ३६ ॥
इति क्रुधा भाषितमार्तया तया मात्रा स्वयाऽऽकर्ण्य दुरात्मसत्तमः
रोषं विधायाऽऽत्मगतं पुनर्यंयो अगाद तो निश्चयभृत्तपः प्रति ॥ ३

रावण उवाच।

जनन्याकर्णय वचो मम गर्वसमन्वितम्।
रत्नगर्भा त्वमेवासि यस्याः पुत्रास्त्रयो वयम् ॥ ३८ ॥
कोऽसौ कीटः सधनदः क तपः स्वल्पकं पुनः।
का लङ्का किं तद्राज्यं स्वल्पसेवकसंयुतम् ॥ ३९ ॥
मातः! शृणु ममोत्साहात्प्रतिज्ञा करुणान्विते!

शर्वं ध्यात्वा ययौ ब्रह्मा कैलासं त्रिदशैः सह ।
तस्य शैलस्य पार्श्वे तु वैनिर्मेण समावृताः ॥ १० ॥

स्थितास्तेऽस्तुवन्देवाः शम्भुं शक्रपुरोगमाः । नमो भवाय शर्वाय नीलग्रीवाय
नमः स्थूलाय सूक्ष्माय बहुरूपाय ते नमः । इति सर्वैर्मुनिभिः कृतां वाणीमाकर्ण्य
ग्रीवाय नन्दिने देवानानयेति समाज्ञितकम् । तदनन्तरं देवा आहूता नन्दि
प्रविश्यान्तःपुरे देवा ददृशुर्विस्मितेक्षणाः । ब्रह्माऽऽगत्य ददर्शाथ शङ्करं लोक
गणकोटिसहस्रैस्तु सेवितं भोदशालिभिः । भग्नैर्विरूपैः कुटिलैर्धूसरैर्विकटै
प्रणिपत्याग्रतःस्थित्वा सह देवैः पितामहः । उवाच देवदेवेशं पञ्चवक्त्रं दिव्य

कृपां कुरु महादेव ! शरणागतवत्सल ! ।
दुष्टदैत्यवधार्थं त्वं समुद्योगं विधेहि भोः ॥ १७ ॥

सोऽपि तद्वचनं श्रुत्वा दैन्यशोकसमन्वितम् । त्रिदशैः सहितः सर्वैर्जगाम हरे
तुष्टुवुर्मुनयः सर्वे सासुरोरगकिन्नराः । जय माधव ! देवेश ! जयभक्तजनार्तिहन्
विलोकय महादेव ! लोकयस्व स्वसेवकान् । इत्युच्चैर्जगदुः सर्वे देवाः शर्वपु

इत्युक्तमाकर्ण्य सुराधिनाथो हृष्ट्वा सुरार्तिं परिचिन्त्य विष्णुः ।
जगाद देवाञ्जलदौघया गिरा दुःखं तु तेषां प्रशमं नयन्निव ॥ २१ ॥
भो ब्रह्मशर्वेन्द्रपुरोगमामराः ! शृण्वन्तु वाचं भवतां हिते रताम् ।
जाने दशग्रीवकृतं भयं वस्तन्नाशयाम्यद्य कृतावतारः ॥ २२ ॥
पुरी त्वयोध्या रविवंशजातैर्नृपैर्महादानमखादिसत्क्रियैः ।
प्रपालिता भूतलमण्डनीया विराजते राजतभूमिभागैः ॥ २३ ॥
तस्यां दशरथो राजा निरपत्यः श्रियान्वितः ।
पालयत्यधुना राज्यं दिक्चक्रजयवान्विभुः ॥ २४ ॥
स तु वन्यादृष्यशृङ्गात्प्रार्थितात्पुत्रकाम्यया ।
पुत्रेष्ट्यां विधिना यज्वा महाबलसमन्वितः ॥ २५ ॥

प्रार्थितः पूर्वं तपसा तेन भोः सुराः ! । पत्नीषु तिसृषु प्रीत्या चतुर्धाऽपिभव

रामलक्ष्मणशत्रुघ्नभरताख्यासमन्वितः । कर्ताऽस्मि रावणोद्धारं समूलबलवाहनम् ॥
भवन्तोऽपि स्वकैरंशैरवतीर्य चरन्त्विह । ऋक्षवानररूपेण सर्वत्र पृथिवीतले ॥ २८ ॥
इत्युक्त्वा विररामाऽऽशु नभसीरितवाङ् मुने ! ।
देवाः श्रुत्वा महद्वाक्यं सर्वे संहृष्टमानसाः ॥ २९ ॥
ते चक्रुर्गदितं यादृग्देवदेवेन धीमता । स्वैःस्वैरंशैर्महीपूर्णा ऋक्षवानररूपिभिः ॥३०॥
योऽसौ विष्णुर्महादेवो देवानां दुःखनाशकः। स त्वमेव महाराज ! भगवान्कृतविग्रहः
भरतोऽयं लक्ष्मणश्च शत्रुघ्नश्च महामते ! । तावकांशाद्दशग्रीवो जनितश्च सुरार्दनः ॥
पूर्ववैरानुबन्धेन जानकीं हृतवान्पुनः । स त्वया निहतो दैत्यो महाराक्षसजातिमान् ॥
पुलस्त्यपुत्रो दैत्येन्द्रःसर्वलोकैककण्टकः । पालितःपृथिवी सर्वा सुखमाप महेश्वर ! ॥
ब्राह्मणानां सुखं त्वद्य मुनीनां तापसं बलम् ।
शिवानि सर्वतीर्थानि सर्वे यज्ञाः सुसंहिताः ॥ ३५ ॥
त्वयि राज्ञि जगत्सर्वं सदेवासुरमानुषम् । सुखं प्रपेदे विश्वात्मञ्जगद्योने ! नरोत्तम ! ॥
एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं त्वयाऽनघ । उक्तश्च विपरीतश्च मया मत्यनुसारतः
इत्थं निशम्य दितिजेन्द्रकुलानुकारिवार्तां महापुरुष ईश्वर ईशिता [illegible] ।
संरुद्धबाष्पकलदश्रुमुखारविन्दो भूमौ पपात सदसि प्रथितप्रभावः ॥ ३८ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
रावणोत्पत्तिविपत्तिकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### ब्रह्मवधपरितप्तस्य रामस्य पश्चात्तापकरणम् ।

शेष उवाच ।

वात्स्यायन ! मुनिश्रेष्ठ ! कथा पापप्रणाशिनी । ब्रह्मण्यदेवदेवस्य सर्वधर्मैकरक्षितुः ॥

अगस्त्य उवाच ।

मा विषादं महावीर ! कुरु राजन्महामते । न ते ब्राह्मणहत्या स्याद्दुष्टानां नाशमिच्छतः

त्वं पुराणः पुमान्साक्षादीश्वरः प्रकृतेः परः ।
कर्ता हर्ताऽविता साक्षी निर्गुणः स्नेहकृत्‌ गुणैः ॥

सुरापो ब्रह्महत्याकृत्स्वर्णस्तेयी महाघकृत् । सर्वे त्वन्नामस्मरणेन पूता यास्यन्ति हि
इयं देवी जनकजा महाविद्या महामते । यस्याः स्मरणमात्रेण मुक्ता यास्यन्ति सद्गतिम्

रावणोऽपि न वै दैत्यो वैकुण्ठे तव सेवकः ।
ऋषीणां शापतोऽयातो दैत्यत्वं दनुजान्तक ॥
तस्याऽनुग्रहकर्ता त्वं न तु हन्ता द्विजन्मनः ।
एवं सञ्चिन्त्य मा भूयो निजं शोचितुमर्हसि ॥ २२ ॥

इति श्रुत्वा ततो वाक्यं रामःपरपुरञ्जयः । उवाच मधुरं वाक्यं गद्गदस्वरभाषितम् ॥

श्रीराम उवाच ।

पातकं द्विविधं प्रोक्तं ज्ञाताज्ञातविभेदतः ।
ज्ञातं यद्बुद्धिपूर्वं हि अज्ञातं तद्विवर्जितम् ॥ २५ ॥

बुद्धिपूर्वं कृतं कर्म भोगेनैव विनश्यति । नश्येदन्यथा यदिदं शास्त्रविनिश्चितम् ॥
कुर्वतो बुद्धिपूर्वं मे ब्रह्महत्या सुनिन्दिताम् । न मे दुःखापनोदाय साधुवादः सुसंमतः
ब्रू हि तादृशं मह्यं यादृशं पापदाहकम् । व्रतं दानं मखं किञ्चित्तीर्थमाराधनं महत् ॥
येन मे विमलाकीर्तिर्लोकान्वै पावयिष्यति । पारावारान्तकालुष्याद्ब्रह्महत्याहतप्रभात्

शेष उवाच ।

इत्युक्तवन्तं तं रामं अगाद् स तपोनिधिः । सुरासुरनमस्मौलिमणिनीराजिताङ्घ्रिकम्
शृणु राम ! महावीर ! लोकानुग्रहकारक ! । विप्रहत्यापनोदाय मम यद्वचनं ब्रुवे ॥
सर्वं स पापं तरति योऽश्वमेधं यजेत वै । तस्मात्त्वं यज विश्वात्मन्वाजिमेधेन शोभिना

समर्थस्तुर्महां भर्त्रा त्वया साध्यो मनीषिणा ।
महासमृद्धियुक्तेन महाबलसुशालिना ॥ ३२ ॥

वाजिमेधो विप्राणां हत्यायाः पापनोदनः । कृतवान्यंमहाराजो दिलीपस्तव पूर्वज
क्रतुःशतं कृत्वा क्रतूनां पुरुषर्षभः । पदमापामराचर्यां देवदैत्यसुसेवितम् ॥ ३४ ॥
सगरो राजा मरुत्तो नहुषात्मजः । एते ते पूर्वजाःसर्वे यज्ञं कृत्वा पदं गताः ।

तस्मात्त्वं कुरु राजेन्द्र ! समर्थोऽसि समन्ततः ।
भ्रातरो लोकपालामा वर्तन्ते तव भावुकाः ॥ ३६ ॥
इत्युक्तमाकर्ण्य मुनेः स भाग्यवानृयूत्तमो ब्राह्मणघातभीतः ।
पप्रच्छ यागे सुमतिं चिकीर्षन्विधिं पुराचितपरिणीयमानः ॥ ३७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
रघुनाथस्यागस्त्योपदेशो नामाष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः

*अश्वमेधीयाश्वविषये रामस्यागस्त्येन सह स्वाश्वशालायाःनिरीक्षणम् ।*

श्रीराम उवाच ।

कीदृशोऽश्वस्तत्र भाव्यः को विधिस्तत्र पूजने ।
कथं वा शक्यते कर्तुं के जेयास्तत्र वैरिणः ॥ १ ॥

अगस्त्य उवाच ।

गङ्गाजलसमानेन वर्णेन वपुषा शुभः । कर्णे श्यामो मुखे रक्तःपीतःपुच्छे सुलक्षितः ॥
वेगःसर्वगतिरुच्चैःश्रवस्समप्रभः । वाजिमेधे हयःप्रोक्तः शुभलक्षणलक्षितः ॥ ३ ॥
वैशाखपौर्णमास्यां तु पूजयित्वा यथाविधि ।
पत्रं लिखित्वा भाले तु स्वनामबलचिह्नितम् ॥ ४ ॥
र्नीयःप्रयत्नेन रक्षकैःपरिरक्षितः । यत्र गच्छति यज्ञाश्वस्तत्र गच्छेत्सुरक्षकः ॥५॥
बलान्निबध्नाति स्ववीर्यबलदर्पितः । तस्मात्सप्रयत्नेनःपरिरक्षाकरैर्हयः ॥ ६ ॥
तावत्सुविधिना स्थातव्यं नियमादिह । मृगशृङ्गधरो भूत्वा ब्रह्मचर्यसमन्वितः

व्रतं पालयमानस्य यावद्वर्षमतिक्रमेत् । तावद्दीनान्धकृपणाः परितोष्या धनादिभिः
अन्नं तु बहुशो देयं धनं वा भूरि मारिष । यद्यत्प्रार्थयते धीमांस्तत्तदेव ददाति हि ॥
एवं प्रकुर्वतः कर्म वर्षे सम्पूर्णतां गतः । करोति सर्वपापानां नाशनं रिपुनाशन ! ॥१०॥

तस्माद्भवान्समर्थोऽस्ति करणे पालनेऽर्चने ।
कृत्वा कीर्तिं सुविमलां पावयान्याञ्जनान्नृप ! ॥ ११ ॥

श्रीराम उवाच ।

विलोकय द्विजश्रेष्ठ ! वाजिशालां ममाधुना ।
तादृशाः सन्ति नो वाऽश्वाः शुभलक्षणलक्षिताः ॥ १२ ॥
इति श्रुत्वा तु तद्वाक्यमगस्त्यः करुणाकरः ।
उत्तस्थौ वीक्षमाणोऽयं यागार्हान्वाजिनः शुभान् ॥ १३ ॥
गत्वाऽथ तत्र शालायां रामचन्द्रसमन्वितः ।
ददर्शाश्वान्विचित्राङ्गान्मनोवेगान्महाबलान् ॥ १४ ॥

अथ निजनगरस्थाः किं वाजिराजस्य वंश्याः किमथ रघुपतीनामेकतः कीर्तिपिण्डाः ।
किमिदमनुनराशिर्मोहरूपेण सिन्धोर्मुनिरिति मनसोऽन्तर्विस्मयं प्राप पश्यन् ॥१५॥

एकतः शोणदेहा वै वाजिनो वह्निसत्तमाः ।
एकतः श्यामकर्णाश्च कस्तूरीकान्तिसन्निभाः ॥ १६ ॥

एकतः कनकाभाश्च ह्यन्यतो नीलवर्णिनः । एकतश्शबलैर्वर्णैर्विविधैर्वाजिभिर्वृताः ॥
एवं पश्यन्मुनिः सर्वान्कौतुकाविष्टमानसः । यथायथाग्र तान्द्रष्टुं चालयोत्यातदा मुनिः
ददर्श तत्र शतशो वर्णांस्तादृशवर्णकान् । दृष्ट्वाऽपि विस्मयमापेदे समुनिर्दर्शिताद्भुतः ॥

एकतः श्यामकर्णाश्च सर्वाङ्गैः क्षीरसन्निभान् ।
पीतपुच्छान्मुखे रक्तान्सुमन्दलक्षणलक्षितान् ॥ २० ॥
निरीक्ष्य परितोऽश्वान्विमलक्षीरपारानिभान्-
मनोजवनवेगितान्विमलकीर्तिपुञ्जनिभान् ॥
वयोविधिविशेषज्ञो मुनिरूचाथ सीतापतिं ।

विजित्य हयरक्षार्थं भ्रातृपुत्रमिमं प्रयच्छ प्रभो: ॥ २१ ॥

अगस्त्य उवाच ।

हयमेधकर्ता योऽयमाहार्षीत् बहुशः शुभान् । एवंगतो नेत्रयोर्मेऽद्य मूर्तिमान्स्ति रघूत्तम !
रामचन्द्र ! महाभाग ! सुरासुरनमस्कृत ! । यज्ञं कुरु महाराज ! हयमेधं सुविस्तरम् ॥
सुरपतिरिव सर्वान्यज्ञसङ्घान्विधंसनम हर सुरवरांराभिमोर्ग विशोधयन् ॥ २३ ॥
हतविपुलगणमुख्यं सागरान्तं विजित्य क्षितितलसुखभोगं कुर्विदं भूमिभाग ! ॥ २४ ॥
इत्येवं वाक्यवादेन परितुष्टाखिलेन्द्रियः । सर्वाण्ये यज्ञसम्भारानाजहार मनोहरान् ॥
मुख्यवित्तो महाराजःसम्पूर्णविमाणनः । सुवर्णलाङ्गलैर्भूमिं विचकर्ष महीयसीम् ॥२६॥
विलिख्य भूमिं बहुशश्चतुर्योजनसम्मिताम् । मण्डपान्रचयामास यज्ञार्थं स नरोत्तमः

कुण्डं तु विधिवत्कृत्वा योनिमेखलयान्वितम् ।
अनेकरत्नरचितं सर्वशोभासमन्वितम् ॥ २८ ॥

मुनीश्वरो महाभागो वसिष्ठःसुमहातपाः । सर्वंतत्कारयामास वेदशास्त्रविधिश्रितम्
प्रेषितास्तेन मुनिना शिष्या मुनिवराश्रमान् । कथयामासुरुद्युक्तं हयमेधे रघूत्तमम् ॥
आकारितास्तदा सर्वे ऋषयस्तपतां वराः । आजग्मुःपरमेशस्य दर्शने स्वतिलालसाः ॥

नारदोऽसितनामा च पर्वतः कपिलो मुनिः ।
जातूकर्ण्योऽङ्गिरा व्यास आर्ष्टिषेणोऽत्रिरासुरिः ॥ ३२ ॥

हारीतो याज्ञवल्क्यश्च संवर्तःशुकसंज्ञितः । इत्येवमाद्यो रामहयमेधवरं ययुः ॥३३॥
तान्सर्वान्पूजयामास रघुराजो महामनाः । प्रत्युत्थानाभिवादाभ्यामर्घ्यविष्टरकादिभिः
गां हिरण्यं ददौ तेभ्यःप्रायशो हृष्टविक्रमः । महद्भाग्यं स्वद्य मेऽस्ति यद्यूयं दर्शनं गताः

शेष उवाच ।

एवं समाकुले ब्रह्मन्नृषिवर्यसमागमे । धर्मवार्ता बभूवाहो वर्णाश्रमसुसंमता ॥ ३६ ॥

वात्स्यायन उवाच ।

का धर्मवार्ता तत्रासीत्किं वा कथितमद्भुतम् ।
साधवः सर्वलोकानां कारुण्यात्किमुताब्रुवन् ॥ ३७ ॥

शेष उवाच ।

तान्समेतान्मुनीन्दृष्ट्वा रामो दाशरथिर्महान् ।
पप्रच्छ सर्वधर्मांश्च सर्ववर्णाश्रमोचितान् ॥ ३८ ॥
ते तु पृष्टा हि रामेण धर्मान्प्रोचुर्महागुणान् ।
तान्प्रवक्ष्यामि ते सर्वान्यथाविधि शृणुष्व तान् ॥ ३९ ॥

ऋषय ऊचुः ।

ब्राह्मणेन सदा कार्यं यज्ञनाध्ययनादिकम् ।
वेदान्पठित्वा विरजेन्नो वा गार्हस्थ्यमाविशेत् ॥ ४० ॥

ब्राह्मणेन सदा त्याज्यं नीचसेवानुजीवनम् । आपन्नतोऽपि जीवेत श्ववृत्त्या कदाचन ऋतुकालाभिगमनं धर्मोऽयं गृहिणःपरः। स्त्रीणां वरमनुस्मृत्याऽपत्यकामोऽथ वा भवेत् दिवाभिगमनं पुंसामनायुष्यकरं मतम् । श्राद्धाहःसर्वपर्वाणि यतस्त्याज्यानि धीमता तत्र गच्छेत्स्त्रियं मोहाद्धर्मात्प्रच्यवते परात् । ऋतुकालाभिगामी यःस्वदारनिरतश्च यः सर्वदा ब्रह्मचारी ह विज्ञेयःस गृहाश्रमी । ऋतुःषोडशयामिन्यश्चतस्रस्ता सुगर्हिताः ॥

पुत्रदास्तासु या युग्मा अयुग्माः कन्यकाप्रदाः ।
त्यक्त्वा चन्द्रमसं दुष्टं मघां मूलं विहाय च ॥ ४६ ॥

शुचिःसन्निविशेत्पत्नीं पुंनामर्क्षे विशेषतः । शुचिं पुत्रं प्रसूयेत पुरुषार्थप्रसाधनम् ॥ आर्षे विवाहे गोद्वन्द्वं यदुक्तं तत्प्रशस्यते । शुल्कमण्वपि कन्यायाःकन्याक्रेतुस्तु पापकृत् वाणिज्यं नृपतेःसेवा वेदानध्ययनं तथा । कुविवाहःक्रियालोपःकुलपातनहेतवः ॥ अन्नोदकपयोमूलफलैर्वाऽपि गृहाश्रमी । गोदानेन तु यत्पुण्यं पात्राय विधिपूर्वकम् ॥

अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति ।
आजन्म सञ्चितात्पुण्यात्क्षणात्स हि दरिद्रभवेत् ॥ ५१ ॥

पितृदेवमनुष्येभ्यो दत्त्वाऽश्नीतामृतं गृही । स्वार्थं पचत्यघं भुङ्क्ते केवलं स्वोदरम्भरिः पर्वस्वभ्यो विरोत्पापं तैले मांसे सदैव हि । चतुर्दश्यां तथाऽमायां त्यजेत क्षुरमङ्गनाम् रजस्वलां न सेवेत नाश्नीयात्सह भार्यया । एकवासा न भुञ्जीत न भुञ्जीतोत्कटासने

वसिष्ठ उवाच।

रामचन्द्र ! महाबाहो ! समयःपर्यभूत्तव । हयो यत्र प्रमुच्येत यज्ञार्थं परिपूजितः ॥३॥

सामग्री क्रियतां तत्र आहूयन्तां द्विजोत्तमाः ।
करोतु पूजां भगवान्ब्राह्मणानां यथोचिताम् ॥ ४ ॥

दीनान्धकृपणानां च दानं स्वान्ते समुत्थितम् ।
ददातु विविधस्तेषां प्रतिपूज्याभिमान्य च ॥ ५ ॥

अथान्कनकसत्पत्न्यादीक्षितश्चरताद्व्रतम् । भूमिशायी ब्रह्मचारी वसुभोगविवर्जितः ॥

मृगशृङ्गधरःकट्यां मेखलाजिनदण्डभृत् । करोतु यज्ञसम्भारं सर्वद्रव्यसमन्वितम् ॥

इति श्रुत्वा मद्वाक्यं वसिष्ठस्य यथार्थकम् ।
उवाच लक्ष्मणं धीमान्नानार्थपरिबृंहितम् ॥ ८ ॥

श्रीराम उवाच ।

शृणु लक्ष्मण ! मद्वाक्यं श्रुत्वा तत्कुरु सत्वरम् ।
हयमानय यत्नेन वाजिमेधक्रियोचितम् ॥ ६ ॥

शेष उवाच ।

श्रुत्वा वाक्यं रघुपतेःशत्रुजिल्लक्ष्मणस्तदा । सेनापतिमुवाचेदं वचो विविधवर्णनम् ॥

लक्ष्मण उवाच।

वीराकर्णय मे वचः सुमधुरं श्रुत्वा त्वरातः पुनः ।
कार्यं तत्क्षितिपालमौलिमुकुटेषु प्राङ्घ्रि रामाज्ञया ॥
सेनां कालबलभ्रमञ्जनबल मोचत्समर्याङ्गिनीम् ।
सज्जां सद्रथहस्तिपत्तिसुहयारोहैर्विधेह्यान्विताम् ॥ ११ ॥

सज्जीस्ता वायुवेगास्तुरङ्गास्तरङ्गमालाललिताङ्घ्रिपाताः ।
सद्भचारैर्बहुशस्त्रधारिभिः संरोहिता वैरिबलप्रहारिभिः ॥ १२ ॥
संलक्ष्यन्तां हस्तिनःपर्वताभा आधोरणैःप्रासकुन्ताग्रहस्तैः ।
शूरैः सास्त्रैर्भूरिदानोपहाराः क्षीवास्ते सर्वशस्त्रास्त्रपूर्णाः ॥ १३ ॥

[illegible] ।
[illegible] ॥ १४ ॥
[illegible] । [illegible] ॥

इत्याकर्ण्य वचस्तस्य लक्ष्मणस्य महात्मनः ।
सेनान्यः कालजिन्नामा कारयामास सज्जताम् ॥ १६ ॥
दशाभुजमण्डितो लघुगुर्वभ्रशोभान्वितो,
विविधरत्नशुचिभूषितफलकरत्नकांशो मणिः ॥
मुखे विशदकान्तिपूरवलितकान्तिभृत् कर्णयो,
स्तरंगतरल तदा हयो धृतकराग्ररश्मिच्छटः ॥ १७ ॥
यत्नात्संशोभितमुखःस्फुरद्रत्नविशोभितः ।
मुक्ताफलानां मालाभिः शोभितो निर्ययौ हयः ॥ १८ ॥

श्वेतातपत्ररचितः सितचामरशोभितः । पद्मशोभापरस्ताङ्गो निर्ययौ हयराट् ततः ॥
अग्रतो मध्यतश्चैके पृष्ठतःसैनिकास्तथा । देवा हर्षं यथापूर्वं सैषन्ते सैषनोचितम् ॥
अथ सैन्यं समाहूय सर्वमाज्ञापयत्तदा । हस्त्यश्वरथपादातवृन्दैःसुयतु सङ्कुलम् ॥
ततस्ततःसमेतानां सैन्यानां श्रूयते ध्वनिः । ततो दुन्दुभिनादोऽभूत्तस्मिन्पुरवरे तदा ॥
सन्निनादेन शूराणां प्रियेण महता तदा । कम्पन्ते गिरिशृङ्गाणि प्रासादा विचलन्ति च
हेषारवो महानासीद्वाजिनां मुह्यतो नृप ! । रथाङ्गघातसंघुष्टा धरा सञ्चलतीव सा ॥
चलितैर्गजयूथैश्च पृथ्वी रुद्धा समन्ततः । रजस्तु प्रबलस्तत्र जनान्सर्वानमादधात् ॥

निर्जगाम महासैन्यं छत्रैः संछाद्य भास्करम् ।
सेनान्या कालजिन्नाम्ना प्रेरितं जनसङ्कुलम् ॥ २६ ॥
गर्जन्तस्तत्रघोराश्वाःकुर्वन्तो रणसम्भ्रमम् ।
रघुनाथस्य यात्राय सज्जास्ते प्रययुर्मुदा ॥ २७ ॥

मृगमदमयमङ्गेष्वङ्गरागं दधानाः कुसुमविमलमाला शोभितस्योत्तमाङ्गाः ।
समस्ताः प्रययुरघनिनाथप्रेरितास्तेऽपि सर्वे ॥ २८ ॥

इत्येवं ते महाराजं ययुः सेनावरा वराः । धनुर्धराः पाशधराः खड्गधराः स्फुटप्रभाः ॥
एवं शनैःशनैः रामो मण्डपं यागचिह्नितम् । हयखुरक्षततलां भूमिं कुर्वन्नमः स्तुवन् ॥
रामो दृष्ट्वा हरिं प्राप्तं बहुसन्तुष्टमानसः । वसिष्ठं प्रेरयामास क्रियाकर्तव्यतां प्रति
वसिष्ठो राममाहूय स्वर्णपत्नीसमन्वितम् । प्रयोगं कारयामास ब्रह्महत्यापनोदनम् ॥
ब्रह्मचर्यव्रतधरो मृगशृङ्गपरिग्रहः । तत्कर्म कारयामास रामः परपुरञ्जयः ॥ ३३ ॥

प्रारेभे यागकर्मांऽथ कुण्डं मण्डपसंमितम् ।
तत्राचार्योऽभवद्धीमानगस्त्यस्तपसां निधिः ॥ ३४ ॥

वसिष्ठो रघुनाथस्य कुलपूर्वगुरुर्मुनिः । ब्रह्मत्वं तत्राकरोद्ब्रह्मकर्मागस्त्यस्तपोनिधिः ।
वाल्मीकिर्मुनिरध्वर्युर्मुनिःकण्वस्तु द्वारपः अष्टौ द्वाराणि तत्रासंस्तोरणशुभानि वै ।

द्वारि द्वारि द्वयं विप्र ब्राह्मणस्याभिमंत्रवित् ।
पूर्वद्वारि मुनिश्रेष्ठौ देवलासितसंज्ञितौ ॥ ३७ ॥
दक्षिणद्वारि भूमानौ कश्यपात्री तपोनिधी ।
पश्चिमद्वारि भुवनौ जातूकर्ण्योऽथ जाजलिः ॥ ३८ ॥

उत्तरद्वारि तु मुनी द्वौ द्वितैकततापसौ । एवं द्वारविधिं कृत्वा वसिष्ठःकलशोद्भवः ।
हयवर्यस्य सत्पूजां कर्तुमारभत द्विज ! । सुवासिन्यःस्त्रियस्तत्र वासोऽलङ्कारभूषिता
हरिद्राऽक्षतगन्धाद्यैः पूजयामासुरर्चितम् । नीराजनं ततःकृत्वा धूपयित्वाऽगुरुक्षणौ
वर्धापनं ततो वेश्याश्चक्रुस्ता वाद्यवाक्यया । एवं सम्पूज्य विमले भाले चन्दनचर्चिते ।
कुङ्कुमादिकगन्धाढ्यसर्वशोभासमन्विते । बबन्ध भास्वरं पत्रं तप्तहाटकनिर्मितम्
तत्रालिखद्दाशरथेः प्रतापबलमूर्जितम् । सूर्यवंशध्वजो धन्वी धनुर्दीक्षागुरुर्गुरुः ॥४४
यं देवाःसासुराःसर्वे नमन्ति मणिमौलिभिः । तस्यात्मजो वीरवलदर्पहारी रघूद्वहः
रामचन्द्रोमहाभागःसर्वशूरशिरोमणिः । तन्माता कोसलनृपपत्नी गर्भसमुद्भवा ॥४६
तस्याः कुक्षिभवं रत्नं रामःशत्रुक्षयङ्करः । करोति हयमेधं वै ब्राह्मणेन सुशिक्षितः

रामेणाभिनवविप्रेन्द्रवधपापापनुत्तये ।
मोचितस्तेन वाहानां मुख्योऽसौ वाजिनाम्बरः ॥ ४८ ॥

ये स्मरन्ति महाविष्णुं सर्वभूतहृदि स्थितम् । ते मन्तव्या महाविष्णुसमरूपा रघूद्वह !
यस्य स्वीयो न पारक्यो यस्य मित्रसमो रिपुः ।
ते वैष्णवाः क्षणादेव पापिनं पावयन्ति हि ॥ ६५ ॥
येषां प्रियं भागवतं येषां वै ब्राह्मणाःप्रियाः । वैकुण्ठात्प्रेषितास्तेऽत्र लोकपावनहेतवे
येषां वक्त्रे हरेर्नाम हृदि विष्णुः सनातनः । उदरे विष्णुनैवेद्यं स श्वपाकोऽपिवैष्णवः
येषां वेदाःप्रियतमा न च संसारजं सुखम् । स्वधर्मनिरता ये च तान्नमस्कुर्विहान्विसान्
येषां विष्णौ न वा भेदो न च ब्रह्ममहेशयोः । तेषां पादरजःपूतं वहाम्यघविनाशनम्
गौरी गङ्गा महालक्ष्मीर्यस्य नास्ति पृथक्कया ।
ते मन्तव्या नराः सर्वे स्वर्गलोकादिहागताः ॥ ७० ॥
शरणागतरक्षी च मानदानपरायणः । यथाशक्ति हरेःप्रीत्यै स ज्ञेयो वैष्णवोत्तमः ॥
यस्य नाम महापापराशिं दहति सत्वरम् । तदीयचरणद्वन्द्वे भक्तिर्यस्य स वैष्णवः ॥
इन्द्रियाणि वशे येषां मनोऽपि हरचिन्तकम् ।
तान्नमस्कृत्य पूयात्स ह्याजन्ममरणान्तिकात् ॥ ७३ ॥
परस्त्रियं त्वं करवालशस्त्रजन्मनैर्यशोभूषणभूतिभूमिः ।
एवं ममादेशमथाचरंश्च लभेःपरं धाम सुयोगमीड्यम् ॥ ७४ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे शत्रु
शिक्षाकथनं नाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः

### रामाज्ञया शत्रुघ्नस्य हयपृष्ठतोगमनम् ।

शेष उवाच ।

आज्ञाप्य मघाधामश्चामित्रकर्षणः । वीरानालोकयन्भूयो जगाद शुभया गिरा ॥१

शत्रुघ्नस्य मम भ्रातुर्वाजिरक्षाकरस्य वै । को गन्ता पृष्ठतो वशांस्तत्त्रिदेशपालकः ॥

यः सर्ववीरान्प्रतिमुख्यमागतान्विनिर्जयेन्मर्मभिदस्त्रसङ्घैः ।

गृह्णात्वसौ मे करवीटकं तद् भूमौ यशः स्वं प्रथयन्सुविस्तरम् ॥ ३ ॥

इत्युक्तवति रामे तु पुष्कलो भरतात्मजः । जगाद वीरकं तस्माद्रघुराजकराम्बुजात् स्वामिन्गच्छामि शत्रुघ्न पृष्ठरक्षाकरोऽन्वहम् । सन्नद्धःसर्वशस्त्रास्त्रचापबाणधरःप्रभो ! सर्वमद्य क्षितितलं त्वत्प्रतापो विजेष्यते । एतेनिमित्तभूता वै रामचन्द्र ! महामते ! ॥ भवत्कृपातःसकलं ससुरासुरमानुषम् । उपस्थितं प्रयुद्धाय तन्निरोधे क्षमो ह्यहम् ॥ सर्वं स्वामी ज्ञास्यति यन्मम विक्रमदर्शनात् । एषगन्ताऽस्मि शत्रुघ्नपृष्ठरक्षाप्रकारकः ॥

एवं ब्रुवन्तं भरतात्मजं स प्रस्तूय साध्वित्यनुमोदमानः ।

शशंस सर्वान्कपिवीरमुख्यान्प्रमञ्जनोद्भूतमुखान्हरिःप्रभुः ॥ ६ ॥

भो हनूमन्महावीर ! शृणु मद्वाक्यमादृतः । त्वत्प्रसादान्मया प्राप्तमिदं राज्यमकण्टकम् सीतया मम संयोगो यो भवाञ्जलधिं तरेत् । चरितं तद्वरे ! वेद्मि सर्वं तव कपीश्वर ! ॥

त्वं गच्छ मम सैन्यस्य पालकः सम्ममाऽऽज्ञया ।

शत्रुघ्नः सोदरो मह्यं पालनीयस्त्वहं यथा ॥ १२ ॥

यत्र यत्र मतिभ्रंशःशत्रुघ्नस्य प्रजायते । तत्र तत्र प्रबोद्धव्यो भ्राता मम महामते ! ॥ इति श्रुत्वा मद्वाक्यं रामचन्द्रस्य धीमतः । शिरसा तत्समाधाय प्रणाममकरोत्तदा भ्राताऽदिशन्महाराजो जाम्बवन्तं कपीश्वरम् । रघुनाथस्य सेवायै कपिपुङ्गवतेजसम् ॥ अङ्गदो गवयो मैन्दस्तथा दधिमुखःकपिः । सुग्रीवः शतवलीशःशतवल्यक्षिको कपी नीलो नलो मनोवेगोऽधिगन्ता वानराङ्गजः । इत्येवमाद्यो यूयं सज्जीभूता भवन्तु भोः सर्वे गजैःसदश्वैश्च रथाद्यैरनुरूपकैः । कवचैःसशिरस्त्राणैर्भूषिता यान्तु सत्वराः ॥

शेष उवाच ।

इत्याज्ञाप्य हनूमन्तं तदा जगाद रामो बहुवीर्यवीर्यवान् ।

समागतानीके ! यद् केऽत्र योद्धा नरा इदं पालयितुं समर्थाः ॥ १६ ॥

तदुत्तरमेवमाकर्ण्य जगाद पार्श्वगदा । इतश्च वराभे योग्याश्चत्रिमोऽत्र नराधिपान् ॥

पौरं रथमेकं मणिरत्नविभूषितम् । चतुर्भिर्वाजिभिर्युक्तं सर्वोपस्करसंयुतम् ॥३९
मणिरत्नं प्रत्यश्वं मुक्ताफलसहस्रकम् । विप्रमुख्य सुतानां तु सहस्रं मुक्तमण्डनम्

ग्राममेकं सुसम्पन्नं नानाजनसमाकुलम् ।
चित्रितस्तम्भ निचयं विविधैर्मन्दिरैर्वृतम् ॥ ४१ ॥
ग्रहणेऽपि रवेर्याहुग्रस्तेऽस्याप्यर्पये ददौ ।
ऋत्विग्भ्यो भूरिशो दत्वा प्रणनाम रघूत्तमः ॥ ४२ ॥

सर्वे तेऽप्यर्थयन्त्याशिषाशीर्भिरभिपूजिताः । चिरंजीव महाराज ! रामचन्द्र ! रघूद्वह ! ॥
कन्यादानं भूमिदानं गजदानं तथैव च । अश्वदानं स्वर्णदानं तिलदानं समौक्तिकम् ॥
अन्नदानं पयोदानमभयदानमुत्तमम् । रत्नदानानि सर्वाणि विप्रेभ्यश्चादिशन्महान् ॥

देहि देहि धनं देहि मा नेति ब्रूहि कस्यचित् ।
ददात्यन्नं ददात्यन्नं सर्वभोगसमन्वितम् ॥ ४६ ॥

इत्थं प्रावर्तत मखो रघुनाथस्य धीमतः । सन्दक्षिणो द्विजवरैः पूर्णः सर्वशुभक्रियः
अथ रामानुजो गत्वा मातरं प्रणनाम ह । आज्ञापयाध्वरक्षार्थमेव गच्छामि शोभने !
त्वत्कृपातो रिपुकुलं जित्वा शोभासमन्वितः । आयास्यामि महाराजैर्वीर्यवद्भिः समन्वित

मातोवाच ।

पुत्र गच्छ महावीर शिवाःपन्थान एव ते । सर्वान्रिपुगणाञ्जित्वा पुनरागच्छ सन्मते !
पुष्कलं पालय निजभ्रातृजं धर्मवित्तमम् । महाबलिष्ठमथापि बालकं लीलया युतम्

पुत्रागच्छसि चेद्युक्तः पुष्कलेनशुभान्वितः ।
तदा मम प्रमोदः स्यादन्यथा शोकभागहम् ॥ ५२ ॥
इति सम्भाषमाणां स्वां मातरं प्रत्युवाच सः ।
त्वदीयचरणद्वन्द्वं स्मरन्प्राप्स्यामिःशोभनम् ॥ ५३ ॥

पुष्कलं पालयित्वाऽहं निजाङ्गमिव शोभने । स्वनाम सदृशं कृत्वा पुनरेष्यामि मोदवा
इत्युक्त्वा प्रययौ धीरो रामं मखमण्डपे । आसीनं मुनिवर्याग्र्यैर्यज्ञवेषधरं वरम् ।
उवाच मतिमान्वीरः सर्वशोभासमन्वितः । रामाज्ञापय रक्षार्थं हयस्यात्र महामते ।

एवं व्यतिकरे वृत्ते सेवकास्तस्य भूपतेः। आयातास्तं हयं बद्धं दृष्ट्वा प्रोचुस्त

बबन्ध को हयमहो रुष्टः कस्य च धर्मराट्।
को बाण भजमञ्जस्यः प्राप्स्यते परमां व्यथाम् ॥ ३२ ॥
तदा लवो जगादाशु मया बद्धोऽश्व उत्तमः।
यो मोचयति तस्याशु रुष्टोभ्राता कुशो महान् ॥ ३३ ॥
यमः करिष्यति किंतु ह्यागतोऽपि स्वयं प्रभुः।
गत्वा गमिष्यति क्षिप्रं शरवृष्ट्या सुतोषितः ॥ ३४ ॥

शेष उवाच।

इति वाक्यं समाकर्ण्य बालोऽयमिति तेऽब्रुवन्।
समागता मोचयितुं हयं बद्धं तु ये हरेः ॥ ३५ ॥
तान्वै मोचयितुं प्राप्ताञ्छत्रुघ्नस्य च सेवकान्।
कोदण्डं करयोर्धृत्वा क्षुरप्रान्समवमुचत् ॥ ३६ ॥
ते छिन्नबाहवः शोकाच्छत्रुघ्नं प्रतिसङ्गताः।
पृष्टास्ते जगदुः सर्वं लवात्स्वभुजकृन्तनम् ॥ ३७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमे
लवेन हयबन्धनं नाम चतुष्पञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशत्तमोऽध्यायः

### वात्स्यायनस्य सीतात्यागविषय प्रश्ने शेषेण तद् वृत्तवर्णनम्।

व्यास उवाच।

एतां श्रुत्वा कथां रम्यां लवस्य बलिनो मुनिः। संशयानः पर्यपृच्छन्नागं दशशा

श्रीवात्स्यायन उवाच।

रघुपोत्तं [redacted] पुरा रामः सीतामेकाकिनीं वने। रजकस्य दुर्वचसाऽसौ तत्याज महि

लवयो कथं तौ जातौ कथं धनुर्धरौ गतौ । कथं च शिक्षिता विद्या यौ रामहयमाहरन्

व्यास उवाच ।

इति श्रुत्वा मुनेर्वाक्यं शेषो नागो महामतिः । प्रशस्य चिरं जगदे रामचारित्रमद्भुतम् ॥

शेष उवाच ।

रामो राज्यमयोध्यायां भ्रातृभिः सहितोऽकरोत् ।
धर्मेण पालयंस्तत्र क्षितिमण्डं स्वया श्रिया ॥ ५ ॥

सीता दधार तद्गर्भं मासाः पञ्चाभवंस्तदा । अत्यन्तं शुशुभे देवी सर्वाय सुन्दरस्वरा ॥

एकान्तसमये रामः पप्रच्छ च विदेहजाम् ।
कीदृशो दोहदः साध्वि ! मया ते साध्यते हि सः ॥ ७ ॥

तदन्वेषं तु सा पृष्टा त्रपमाणा पतिं सती । लज्जागद्गदयाभावं निजगाद वचोऽमृतम्

सीतोवाच ।

त्वत्प्रसादो मया सर्वं भुक्तं भोक्ष्यामि शोभनम् ।
न कश्चिन्मानसे कान्त ! विषयो ह्यतिरिच्यते ॥ ९ ॥

यस्या भवादृशः स्वामी देवसंस्तुतसत्पदः । तस्याः सर्वं परीवर्ति न किञ्चिदवशिष्यते
यमाग्रहात्पृच्छसि मां दोहदं मनसि स्थितम् । ब्रवीमि पुरतः सत्यं तव स्वामिन्मनोहर!

चिरं ज्ञातं मया सत्यो लोपामुद्रादिकाः स्त्रियः ।
दृष्टाः स्वामिन्मनो द्रष्टुं ता उत्सुकति सुन्दरीः ॥ १२ ॥

राज्यं प्राप्ता त्वया सार्द्धमनेकसुखमास्थिता । कृतप्रार्थं कदापीह सा नमस्कर्तुमागता
तत्र गत्वा तपः कोशान्यस्त्राद्यैः परिपूजये । रत्नानि चैव वासांसि भूषा अपि समर्पये
यथा मे तोषिताः सत्यो दद्यत्याशीर्मनोहराः । एष मे दोहदः कान्त परिपूरय मानसम्
इत्थमाकर्ण्य वचनं सीतायाः सुमनोहरम् । जगाद परमप्रीतो रामचन्द्रः प्रियां प्रति

धन्याऽसि जानकि ! प्रातर्गमिष्यसि तपोधनाः ।
प्रेक्ष्य तास्तु कृतार्था त्वमागमिष्यसि मेऽन्तिकम् ॥ १७ ॥

इति रामवचः श्रुत्वा परमां प्रीतिमाप सा । प्रातर्मम भवत्यद्य तापसीनां समीक्षणम्

अथ तन्निशि रामेण चाराः कीर्तिं निजां श्रुताम् ।
प्रेक्षितुं प्रेषितास्ते [illegible] निशीथे ह्यगमञ्छनैः ॥ १६ ॥

ते प्रत्यहं रामकथाः शृण्वन्तः सुमनोहराः । तद्दिने गतवन्तस्तु धनाढ्यस्य गृहं महत

दीपं वीक्ष्य प्रज्वलन्तं वचनं वीक्ष्य मानुषम् ।
स्थितास्तत्र क्षणं चाराः समशृण्वन्यशो भृशम् ॥ २१ ॥
तत्र काचन वामाक्षी बालकं प्रतिहर्षिता ।
स्तनन्धयन्तं निजगौ वाक्यं तु सुमनोहरम् ॥ २२ ॥

प्रिय पुत्र ! पयेदं त्वं स्तन्यं मम मनोहरम् । पश्चात्तव सुदुष्प्रापं भविष्यति ममात्मज ।
एतत्पुर्याः पती रामो नीलोत्पलदलप्रभः । तत्पुरीस्थजनानां तु न भविष्यति वै जनुः ।

जन्माभावात्कथं पानं स्तन्यस्य भुवि जायते ।
तस्मात्पिब मुहुः स्तन्यं दुर्लभं हृदि मन्य च ॥ २५ ॥
ये श्रीरामं स्मरिष्यन्ति ध्यायन्ति च वदन्ति ये ।
तेषामपि पयः पानं न भविष्यति जातुचित् ॥ २६ ॥
इत्यादि वाक्यं संश्रुत्य श्रीरामयशसोऽमृतम् ।
हर्षिताः प्रययुर्गेहमन्यद्भाग्यवतो महत् ॥ २७ ॥

तावदन्यापरस्तत्र मनोरममिदं गृहम् । मत्वा तिष्ठन्हि रामस्य शुश्रूषुर्यशसः क्षणम् ।

तत्र काचिन्निजं कान्तं पर्यङ्कोपरि सुस्थितम् ।
ताम्बूलं चर्वती दत्तं भर्त्रा स्नेहेन सुन्दरी ॥ २९ ॥

कङ्कणस्वरशोभाढ्या कर्पूरागरुधूपिता । कान्तं वीक्ष्य चलन्नेत्रा कामरूपमथोचत ।
नाथ त्वं तादृशो मह्यं भासि यादृग्रघोः पतिः । अत्यन्तं सुन्दरतरं वपुर्विभ्रत्सुकोमल

यमभान्तं नेत्रयुग्मं वक्षो मोहनविस्तृतम् ।
भुजौ च साङ्गदौ विस्तरत्क्षाम्राम स्थासि मे ॥ ३२ ॥
इति वाक्यं समाकर्ण्य कान्तायाः सुमनोहरम्
चुचाव नेत्रयोः प्रान्तं नर्तयन्कामसुन्दरः ॥ ३३ ॥

शृणु कान्त त्वया प्रोक्तं साध्व्या तु सुमनोहरम् ।
पतिव्रतानां त्वयोग्यं स्वकान्तो राम एव हि ॥ ३४ ॥
रे काहं मन्दभाग्य क्व रामो भाग्यवान्महान् । क्व चाहं कीटवत्तुच्छः क्व ब्रह्मादिसुरार्चि
खद्योतः क्व नभो रत्नं शलभः क्व नु पावकः ।
गजारिः क्व मृगेन्द्रोऽसौ शशकः क्व नु मन्दधीः ॥ ३६ ॥
क्व च सा जाह्नवी देवी क्व रथ्याजलमुत्पथम् । क्व मेरुः सुरसंवासः क्व गुञ्जापुञ्जकोऽल्प
तथाऽहं क्व क्व रामोऽसौ यत्पादरजसाऽङ्गना ।
शिलीभूता क्षणाज्जाता ब्रह्ममोहनरूपधृक् ॥ ३८ ॥
इति वाक्यं प्रब्रुवाणं परिरेभे निजं पतिम् । जातकामा हृतप्रेम्णा नर्तितभ्रूधनुर्धरा ॥
इत्यादि वाक्यं संश्रुत्य गतश्चान्यनिवेशनम् ।
तावदन्यचरो वाक्यं शुश्राव रसाऽन्वितम् ॥ ४० ॥
कामिन्पुष्पमयीं शय्यां चन्दनं सह चन्द्रकम् ।
सर्वं विधाय कामार्हे जगाद वचनं पतिम् ॥ ४१ ॥
पते ! कुरुष्व भोगार्हे शयनं पुष्पमञ्चके । चन्दनादिकलेपं च यथा भोगमनेकधा ॥
स्यादृशा एव भोगार्हा न च रामपराङ्मुखाः । सर्वं रामकृपाप्राप्तमुपभुङ्क्ष्व यथासुखम्
मत्सदृशी कामिनी ते चन्दनं तापहारकम् । पर्यङ्कः पुष्परचितः सर्वं रामकृपामयम् ॥
ये रामं न भजिष्यन्ति ते नरा जठरं व्ययम् ।
न भर्तुं शक्नुवन्त्येव वस्त्रभोगादिवर्जिताः ॥ ४१ ॥
इति प्रपत्नी महिला दर्शितः पतिरव्ययम् । सर्वं नव्यं प्रतीपि त्वं मम रामकृपामयम्
इत्येवं रामभद्रस्य यशः श्रुत्वा गतश्चरः । तावदन्यस्य वेश्मन्यचरोऽन्यः शुश्रुवे वच
काचित्कान्तेन पर्यङ्के वीणावादनतत्परा । कान्तेन रामसत्कीर्तिं गायमाना पतिं जगौ
स्वामिन्वयं धन्यतमा येषां पुर्याः पतिः प्रभुः ।
श्रीरामः स्वप्रजाः पुत्रानिव पाति च रक्षकः ॥ ४१ ॥
यो मत्स्यमनुसाध्यं [illegible] न तत् ।

समुद्रं यो निजग्राह सेतुं तत्र बबन्ध च ॥ ५१ ॥
रावणं यो रिपुंहत्वा लङ्कां सम्भज्य वानरैः । जानकीमाजहारात्र महदाचारमाचरत्
इति प्रोक्तं समाकर्ण्य वचः सुमधुराक्षरम् ।
पतिः स्मितं चकारेमां वाक्यं पुनरथाब्रवीत् ॥ ५२ ॥
मुग्धेनेदं महत्कर्म रामचन्द्रस्य भामिनि ! । दशाननवधादीनि समुद्रदमनानि च ॥५३
लीलया योऽवनिं प्राप्तो ब्रह्मादिप्रार्थितो महान् ।
करोति सच्चरित्राणि महापापहराणि च ॥ ५४ ॥
मा जानीहि नरं रामं कौसल्यानन्ददायकम् । सृजत्यवति हन्त्येतद्विश्वं लीलासमानु
धन्या वयं ये रामस्य पश्यामो मुखपङ्कजम् । ब्रह्मादिसुरदुर्दर्शं महापुण्यकृतोदयम्
श्रवणोद्रामचन्द्रस्य चरित्रं श्रुतिसौख्यदम् ।
इत्यादि वाक्यं शुश्राव चारो द्वारि स्थितो मुहुः ॥ ५७ ॥
अन्यो ह्यन्यगृहं गत्वा तस्थौ श्रोतुं हरेर्यशः। तत्रापि रामभद्रस्य यशः शुश्राव शोभन
खेलन्ती स्वामिना सार्धंद्यूतेन सुमनोहरा । उवाच वाक्यं मधुरं नर्तयन्तीव कङ्कणे
जितं मया कान्त ! जवेन सर्वं करिष्यसि त्वं किमु हारितमानसः ।
इत्यादि वाक्यं परिहासपूर्वकं कृत्वा स्वकान्तं परिपस्वजे मुदा ॥ ६० ।
उवाच कान्तश्चार्वङ्गि जितमेव सुशोभने । रामं स्मरतो नित्यं न कुत्रापि पराजयः
इदानीं त्वां तु जेष्यामि रामं स्मृत्वा मनोहरम् ।
देवा यथा पुरा स्मृत्वा दितिजानजयन्क्षणात् ॥ ६२ ॥
एवमुक्त्वा पाशकानां परिवर्तनमाकरोत् ।
सावज्ञयं प्रपेदेऽसौ हर्षितो वाक्यमब्रवीत् ॥ ६३ ॥
मम प्रोकमृतं जातं जिता त्वं नवयौवना । रामस्मारी कदाप्येव न भवेद्रिपुतोभयी
इत्येवं तौ वदन्तौ च परस्परमथोत्सुकौ । परिरभ्य दृढंप्रेम्णा सतश्चारोगतोगृहम्
एवं पञ्चमहाचारा राज्ञः संश्रुत्य वै यशः । परस्परं प्रशंसन्तो गेहं स्वं स्वं ययुर्मुदा
एकः पञ्चमः काष्ठोदानालोक्य तत्र ह ।

अगाम श्रोतुकामोऽसौ यतो रामो महीपतेः ॥ ६७ ॥
रजकः कोपसंस्पृष्टो भार्यामन्यगृहोषिताम् ।
पदा सन्ताडयामास शिक्षयन्प्राणनैश्चयात् ॥ ६८ ॥
गच्छ त्वं मद्गृहात्तस्य गेहं यत्रोषिता दिनम् ।
नाहं गृह्णामि भवतीं दुष्टां पत्यन्यलङ्घिनीम् ॥ ६९ ॥
तदाऽस्य माता प्रोवाच मा त्यजैनां गृहागताम् । अपराधेन रहितां दुष्प
मातरं प्रत्युवाचाथ रजकः कोपसंयुतः । नाहं राम इव प्रेष्ठां गृह्णाम्यन्य
स राजा यत्करोत्येव तत्सर्वं नीतिमद्भवेत् ।
नाहं गृह्णामि मे भार्यां परवेश्मनि संस्थिताम् ॥ ७२ ॥
पुनः पुनरुवाचेदं नाहं रामो महीश्वरः । यः परस्य गृहे संस्थां जानकीं
इति वाक्यं समाश्रुत्य चारः कोपपरिप्लुतः ।
खड्गं गृहीत्वा स्वकरे तं हन्तुं विदधे मनः ॥ ७४ ॥
स रामोक्तं च सस्मार न वध्यः कोऽपि मे जनः ।
इति ज्ञात्वा सरोषं तु सञ्जहार महामनाः ॥ ७५ ॥
तदा श्रुत्वा सुदुःखार्तः पञ्च चारा यतः स्थिताः ।
ततो गतः प्रकुपितो निःश्वसन्मुहुरुच्छ्वसन् ॥ ७६ ॥
ते च परस्परं तत्र मिलितास्तु समब्रुवन् । स्वश्रुतं रामचरितं सर्वलोकै
ते तद्भाषितमाकर्ण्य परस्परममन्त्रयन् ।
न वाच्यं रघुनाथायावाच्यं दुष्टजनोदितम् ॥ ७८ ॥
इति संमन्त्र्य ते गेहं गत्वा सुषुपुरुत्सुकाः ।
प्रातः राज्ञे प्रशंसाम इति बुद्ध्या व्यवस्थिताः ॥ ७९ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे राम
चारनिरीक्षणं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

# षट्पञ्चाशत्तमोऽध्यायः

प्रातः काले चारैः सभामागत्य रामाय रजकोक्तिकथनम् ।

शिव उवाच ।

प्रातर्नित्यं विधायासौ ब्राह्मणान्वेदवित्तमान् ।
हिरण्यदानैः सन्तर्प्य विधिवत्संसदं ययौ ॥ १ ॥
लोकाः सर्वे नमस्कर्तुं रघुनाथं महीपतिम् ।
पुत्रवत्स्वप्रजाः सर्वाः पालयन्तं ययुः सभाम् ॥ २ ॥

लक्ष्मणेनातपत्रं तु धृतं मूर्धनि भूपतेः । तदा भरतशत्रुघ्नौ चामरद्वयधारिणौ ॥ ३ ॥
वसिष्ठप्रमुखास्तत्र मुनयः पर्युपासत । सुमन्त्रप्रमुखास्तत्र मन्त्रिणो न्यायकर्तृकाः ॥
एवं प्रवृत्ते समये चरद्वारास्ते स्थलस्थलाः । समाजग्मुर्नृपतिं नमस्कर्तुं सभास्थितम्
तान्वक्तुकामान्संवीक्ष्य चारान्नृपतिसत्तमः । सभायामन्तरावेश्म रहः प्राविशदुत्सुकः
एकान्ते तांश्चरान्सर्वान्पप्रच्छ सुमतिर्नृपः । कथयन्तु चरा मह्यं यथातथ्यमरिन्दमाः ॥

लोका ब्रुवन्ति मे कीदृग्भार्याया मम कीदृशम् ।
भ्रातृणां कीदृशं लोका वदन्ति चरितं कथम् ॥ ८ ॥
इति वाक्यं समाकर्ण्य चारा राममथाब्रुवन् ।
मेघगम्भीरया वाचा पृच्छन्तं रघुनायकम् ॥ ९ ॥

चारा ऊचुः ।

नाथ कीर्तिर्जनान्सर्वान्पावयत्यधुना भुवि । गृहे गृहे श्रुताऽस्माभिः पुम्भिः स्त्रीभिरीडिता
विवस्वतो महावंशे भवता परमेष्ठिना । अलङ्कर्तुं जनं भूमौ कीर्तिर्विस्तारिता प्रभो
अनेके सगराद्याश्च कीर्तिमन्तो महाबलाः । अभवंस्तादृशी कीर्तिस्तेषां नाभूद्यथा तव ॥

त्वया नाथेन सकलाः सनाथाश्च प्रजाः कृताः ।
यासां नाकालमरणं न च रोगाद्युपद्रुतिः ॥ १२ ॥

यादृशश्चन्द्रमा लोके यादृशी जाह्नवी सरित् ।
तादृक्तव च सत्कीर्तिः प्रकाशयति भूतलम् ॥ १४ ॥
ब्रह्मादिका मयत्कीर्तिमाकर्ण्य त्रपिता भृशम् ।
नाथ ! सर्वत्र ते कीर्तिः पावयत्यधुना जनान् ॥ १५ ॥

वयं धन्यतमाः सर्वे ये चारास्तव भूपते ! । क्षणे क्षणे तव मुखं लोकयाम म

एवः श्रुत्वा तु चाराणां पञ्चानां राघवस्तदा । षष्ठं पप्रच्छ चारं तं विलक्षणमु

राम उवाच ।

सत्यं वद महाबुद्धे ! यत्कृतं लोकसङ्कटे । तादृक्प्रशंस मे सर्वमन्यथा पातका

पुनः पुनश्च तं रामः पप्रच्छाशु सविस्तरम् ।
तथापि न ब्रवीत्येव रामं लौकिकमाश्रितम् ॥ १९ ॥

तदा रामः प्रत्युवाचारं मुखविलक्षितम् । शपामि त्वां तु सत्यं न शंस सर्वं

तदा रामं प्रत्युवाच चारो वाक्यं शनैः शनैः ।
अवक्तव्यमपि ते वाच्यं वाक्यं काकजनोदितम् ॥ २१ ॥

चार उवाच ।

स्वामिन्सर्वत्र ते कीर्तिर्देशालनयधाद्रिका । अन्यत्राक्षसगृहे स्थिता यास्ते स

कारदैवनु रजको निशीथे महिलां स्वकाम् ।
अन्यगेहोषितां दृष्ट्वा धिक्कुर्वन्समताडयत् ॥ २३ ॥
तन्माता प्रत्युवाचेमां कथं ताडयसेऽनघाम् ।
गृहाण मा कृथा निन्दां स्त्रियं मद्वाक्यमाचर ॥ २४ ॥

दाऽप्योवस्तर रजको नाहं रामो महीपतिः । यद्राक्षसगृहेऽभ्युषितां सीतामङ्गीचक

र्षे राज्ञः कृतं कर्म नीतिमद्भवति प्रभो ! । अन्येषां पुण्यकर्तृणामपि हृदयमर्णी

नः पुनरत्याचासीं नाहं रामो महीपतिः । सुकृते समये राजमपा वाक्यं तव म

दानीं शिर आच्छिद्य पातयामि महीतले । इतः पुनर्विचारो मे क रामो रजकः

र्षं दृष्टोऽद्य यदि महीर्ये तथ्यमुच्यते । आज्ञापयसि चेद्राम साम्प्रतं मारयामि

मपि ते प्रोक्तं त्वदाग्रहत्त उन्नयम् । राज्ञा प्रमाणमत्रेदं विचार्यतु सङ्गतम् ॥

शेष उवाच ।

इति वाक्यं समाकर्ण्य महावज्रनिभाक्षरम् ।
निःश्वसन्मुहुरुच्छ्वासमाचरन्मूर्च्छितोऽपतत् ॥ ३१ ॥
तं मूर्च्छितं नृपं दृष्ट्वा चारा दुःखसमन्विताः ।
वीजयामासुर्वासोग्रैर्दुःखापनयहेतवे ॥ ३२ ॥
संज्ञो नृपतिर्मुहूर्तेन जगाद तान् । गच्छन्तु भरतं शीघ्रं प्रेषयन्तु च मां प्रति ॥
ताश्चरास्तूर्णं भरतस्य गृहं गताः । कथयामासू रामस्य सन्देशं नयहारकाः ॥
भरतो रामसन्देशं श्रुत्वा धीमान्ययौ सदः ।
रामं प्रति रहः संस्थं श्रुत्वा तं त्वरया युतः ॥ ३५ ॥
तं प्रतीहारं प्रत्युवाच महामनाः । कुत्रास्ते राममन्त्रोऽसौ मम भ्राता कृपानिधिः
गृहं धीरो ययौ रत्नमनोहरम् । रामं विलोक्य विक्रान्तं भयमाप मानसे
किं वाऽसौ कुपितो रामः किं वा दुःखमिदं विभोः ।
तदा प्रोवाच नृपतिं निःश्वसन्तं मुहुर्मुहुः ॥ ३८ ॥
सुखसमाराध्यं वक्त्रं ते कथमानतम् । अश्रुभिर्लक्ष्यते राजन्मस्तदेहः शशीव ते
सर्वं मे कारणं तथ्यं ब्रूहि मां किं करोमि ते ।
त्यज दुःखं महाराज ! कथं दुःखस्य भाजनम् ॥ ४० ॥
प्रोच्यमानो गद्गदस्वरया गिरा । प्रोवाच भ्रातरं धीरो रामचन्द्रश्च धार्मिकः
र्वचो महां मम दुःखस्य कारणम् । तन्मार्जनं कुरुष्वाद्य भ्रातः भ्रातर्महामते !॥
यते राजा न कश्चिद्यशःक्षतः । मत्कीर्तिरद्य कलुषा गङ्गा यमुनया गता ॥
येषां यशो नृणां भूमौ तेषामेव सुजीवितम् ।
अपकीर्तिक्षतानां तु जीवितं मृतकैः समम् ॥ ४४ ॥
भवेद्भूमौ तेषां लोकाः सनातनाः । अपकीर्त्युरगीदष्टास्तेषां भूयादधोगतिः
अद्य मे कलुषा कीर्तिः स्वर्धुनी लोकविश्रुता ।

तच्छृणुष्व वचो मेऽद्य रजकेन यथोदितम् ॥ ४६ ॥
अस्मिन्पुरेऽद्य रजक उक्तवाञ्जानकीमियम् ।
किञ्चिद्वाच्यं ततो भ्रातः किं करोमि महीतले ॥ ४७ ॥
किमात्मानं जहाम्यद्य किमेनां जानकीं स्त्रियम् ।
उभयोः किं मया कार्यं भवांस्तथ्यं ब्रवीतु तत् ॥ ४८ ॥
इत्युक्त्वा निर्गलद्बाष्पो वेपथुक्षुभिताङ्गकः ।
पपात भूमौ विरजो धार्मिकाणां शिरोमणिः ॥ ४९ ॥
भ्रातरं पतितं दृष्ट्वा भरतो दुःखसंयुतः । संवीक्ष्य जानकीं रामं प्राप्तसंज्ञं चकार सः ॥
संज्ञां प्राप्तं तु संवीक्ष्य रामचन्द्रं सुदुःखितम् ।
उवाच दुःखनाशाय वाक्यं तु सुमनोहरम् ॥ ५१ ॥
कोऽयं वै रजकः किं तु वाच्यं वाक्यं यथाऽब्रवीत् ।
जिह्वाच्छेदं करिष्यामि जानकीवाच्यकारिणः ॥ ५२ ॥
तदा रामोऽब्रवीद्वाक्यं रजकस्य मुखोद्गतम् । श्रुतं चारेण तत्सर्वं भरताय महात्मने ॥
तच्छ्रुत्वा भरतः प्राह भ्रातरं दुःखशोकिनम् । जानकी वह्निशुद्धा भूल्लङ्कायां धीरपूजिता
ब्रह्माऽब्रवीदियं शुद्धा पिता दशरथस्तव । कथं सा रजकोक्तित्वाद्वात्यज्या लोकपूजिता
ब्रह्मादिसंस्तुता कीर्तिस्तव लोकान्पुनाति हि ।
सा कथं रजकोक्त्या वै कलुषाऽद्य भविष्यति ॥ ५६ ॥
तस्मात्त्यज महादुःखं सीतावाच्यसमुद्भवम् ।
कुरु राज्यं तया सार्धमन्तर्वत्न्या सुभाग्यया ॥ ५७ ॥
त्वं कथं स्वशरीरं तु हातुमिच्छसि शोभनम् ।
वयं हताः स्म सर्वेऽद्य त्वां विना दुःखनाशकम् ॥ ५८ ॥
क्षणं सीता न जीवेत त्वां विना सुमहाशया ।
तस्मात्पतिव्रतासार्धं भुङ्क्ष्व विपुलां श्रियम् ॥ ५९ ॥
इति वाक्यं समाकर्ण्य भरतस्य च धार्मिकः । पुनरेव जगादेमं वाक्यं वाक्यविदांव

यत्त्वं कथयसि भ्रातस्तत्सर्वं धर्मसंयुतम्। परं मद्वचनमहं वाक्यं तत्कुरुष्व ममाज्ञया॥

जानाम्येनां वह्निशुद्धां पवित्रां लोकपूजिताम्।
लोकापवादाद्भीतोऽहं त्यजामि स्वां तु जानकीम्॥ ६२॥
तस्मात्करे शितं धृत्वा करवालं सुदारुणम्।
शिरश्छिन्ध्यथवा जायां जानकीं मुञ्च वै वने॥ ६३॥
इति वाक्यं समाकर्ण्य रामस्य भरतोऽपतत्।
मूर्च्छितः सन्निश्चितो देहे कम्पयुक्तः सवाष्पकः॥ ६४॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे भरतवाक्यं नाम षट्पञ्चाशत्तमोऽध्यायः॥ ५६॥

---

## सप्तपञ्चाशत्तमोऽध्यायः

### सीताया भर्तृवियोगकारणकथनम्।

वात्स्यायन उवाच।

जगत्पवित्रसत्कीर्तिर्जानक्या वाच्यवाचनम्। कथंसमकरोत्स्वामी तन्मे कथय सुव्रत!
यथा मे मनसः सौख्यं भविष्यति सुशोभनम्।
तथा कुरुष्व शेषाद्य त्वन्मुखान्निःसृतामृतम्।
पयतस्तृप्तिरेवास्याद्यया संसृतिकृन्तनम्॥ २॥

शेष उवाच।

मिथिलायां महापुर्यां जनको नाम भूपतिः।
तस्यां करोति सद्राज्यं धर्मेणाराधयन्प्रजाः॥ ३॥
तस्य सङ्कर्षतो भूमिं सीतया दीर्घमुख्या। सीरध्वजस्य निरगात्कुमारी ह्यतिसुन्दरी॥
सदाऽत्यन्तं मुदं प्राप्तः सीरकेतुर्महीपतिः। सीता नामाकरोत्तस्या मोहिन्या जगतःश्रियः

रीपद्वीपावनिविने वैकुण्ठी सुमनोहरा । आगत्यानन्यमनः कान्ते शुकयुग्मांगुतं वरम् ॥
अन्यत्ते ह्यंसमारूनपश्यन्ते कामलोलुपम् । परस्परं भाषमाणं श्लोकेन शुभया गिरा ॥
भ्रममाणं तदा युग्मं मनसि शिक्षितागतः । मनुष्यलक्ष्मणोपगतो शिवनं शत्रुं प्रकार तत्
रामो महीपतिर्गुर्णी भविष्यति मनोहरः । तस्य पत्नीति नाम्ना तु भविष्यति मदेत्सिका

स तया सह धर्मात्मा सहस्राण्येकसुन्दरा ।
राज्यं करिष्यते धीमान्कर्मभूमिपतिर्नरम्यहो ॥ १० ॥
धन्या सा जानकी देवी धन्योऽसौ रामसंज्ञितः ।
यौ परस्परमापन्नौ पृथिव्यां रंस्यतो मुदा ॥ ११ ॥
इति सम्भाषमाणं [redacted] शुकयुग्मं तु मैथिली ।
ज्ञात्वेदं देवतायुग्मं वाणीं तस्य विलोक्य च ॥ १२ ॥
मदीयास्तु कथा रम्याः कुरुते शुकयोर्युगम् ।
एतत्तु गृहीत्वा पृच्छामि सर्वं वाक्यं यतार्थकम् ॥ १३ ॥

एवं विचार्य सा स्वीयाः सखीः प्रतिजगाद ह । गृह्यन्तु शकुनैस्तत्पक्षियुग्मं मनोहरम्

सख्यस्तास्तद्गिरिं गत्वा गृह्यत्पक्षियुगं वरम् ।
निवेदयामासुरिदं स्वसख्याः प्रियकाम्यया ॥ १५ ॥

बहुधा विविधान्छब्दान्कुर्वद्वीक्ष्य मनोहरम् । आश्वासयामास तदा पप्रच्छ तदिदं वचः

सीतोवाच ।

मा भैष्टं तु युवां रम्यौ कौ वां कुत्र समागतौ ।
को रामः का च सा सीता तज्ज्ञानं [redacted] कुतः स्मृतम् ॥ १७ ॥

तत्सर्वं शंसतं क्षिप्रं मत्तो वां व्येतु यद्भयम् । इति पृष्टं तया पक्षियुगं सर्वमशंसत ॥

पक्षियुग्ममुवाच ।

वाल्मीकिरास्ते सुमहानृषिर्धर्मविदुत्तमः । आवां तदाश्रमस्थाने सर्वदा सुमनोहरे ॥

स शिष्यानध्यापयामास भावि रामायणं मुनिः ।
प्रत्यहं तत्पदस्मारौ सर्वभूतहितेरतः ॥ २० ॥

तदावाभ्यां श्रुतं सर्वं भावि रामायणं महत्। मुहुर्मुहुर्गीयमानमायातं परिपाठितः

शृण्वावां तेऽभिधास्यावो यो रामो या च जानकी ।
यचद्भविष्यते तस्या रामेण क्रीडितात्मना ॥ २२ ॥
ऋष्यशृङ्गकृतेष्ट्यां च चतुर्धा त्वं गतो हरिः ।
प्रादुर्भविष्यति श्रीमानसुरस्त्रीगीतसत्कथः ॥ २३ ॥
स कौशिकेन मिथिलां प्राप्स्यते भ्रातृसंयुतः ।
धनुष्पाणिस्तदा दृष्ट्वा दुर्ग्राह्यमन्यभूभुजाम् ॥ २४ ॥

धनुर्भङ्क्त्वा जनकजां प्राप्स्यते सुमनोहराम्। तया सह महद्राज्यं करिष्यतिश्रुतं वरे
एतदन्यच्च तत्रत्यैः श्रुतमस्माभिरुन्नतैः। कथितं तव चार्वङ्गि मुञ्चावां गन्तुकामुकौ
इति वाक्यं तयोर्धृत्वा श्रोत्रयोः सुमनोहरम्। पुनरेव जगादेदं वाक्यंपक्षियुगं प्रति
स रामः कुत्र वर्तेत कस्य पुत्रः कथं नु ताम्। परिग्रहीष्यति वरः कीदृग्रूपधरोनरः ॥
मया पृष्टमिदं सर्वं युवां ब्रूतं यथातथम्। पश्चात्सर्वं करिष्यामि प्रियं युष्मन्मनोहरम्

तच्छ्रुत्वा तौ तु कामेन पीडितां वीक्ष्य सा शुकी ।
जानकीं हृदये ज्ञात्वा पपाठ पुरतस्ततः ॥ ३० ॥
सूर्यवंशध्वजो धीमान्राजा पङ्क्तिरथो बली ।
यं देवाः श्रित्य सर्वारीन्विजेष्यन्ते च सर्वशः ॥ ३१ ॥

तस्य भार्यात्रयं भावि शक्रमोहनरूपधृत्। तस्मिन्नपत्यचातुष्कं भविष्यति बलोत्तमम्
सर्वेषामग्रजो रामो भरतस्तदनुस्मृतः। लक्ष्मणस्तदनुश्रीमाञ्छत्रुघ्नः सर्वतो वरः ॥३२
रघुनाथ इति ख्यातिं गमिष्यति महामनाः। तेषामनन्तनामानि रामस्य वलिन. सखि !

पद्मकोश इव शोभनं मुखं पङ्कजायतनयने सुदीर्घके ।
उन्नतापृथुमनोहरनासा वल्गुसङ्गतमनोहरे भ्रुवौ ॥ ३५ ॥
जानुलम्बितमनोहरौ भुजौ कम्बुशोभि गलकोऽतिहृद्यकः ।
सत्कपाटतलविस्तृतस्फिकं वक्ष एतदमलं सलक्ष्मकम् ॥ ३६ ॥
शोभनोरुकटिशोभया युतं जानुयुग्ममलं स्वसेवितम् ।

पादपद्ममखिलैर्निजैः सदा सेवितं रघुपतिं सुशोभनम् ॥ ३७ ॥
एतद्रूपधरो रामो मया किं नु स वर्ण्यते ।
शताननोऽपि नो याति पक्षिणः किमु मादृशाः ॥ ३८ ॥
यद्रूपं वीक्ष्य ललिता मनोहरवपुर्धरा । लक्ष्मीर्मुमोह भुवि का वर्तते यान मुह्यति ॥
महाबलो महावीर्यो महामोहनरूपधृत् । किं वर्णयामि श्रीरामं सर्वैश्वर्यगुणान्वितम् ॥
धन्या सा जानकी देवी महामोहनरूपधृत् । रंस्यते तेन सह या वर्षाणामयुतं मुदा ॥
त्वं कासि किं नु ते नाम वद सुन्दरि वत्सु माम् ।
परिपृच्छसि वै कस्माद्रामकीर्तनमादरात् ॥ ४२ ॥
एतद्वाक्यं समाकर्ण्य जानकीपक्षिणोर्युगम् ।
उवाच जन्मललितं शंसन्ती स्वस्य मोहनम् ॥ ४३ ॥
या त्वया जानकी प्रोक्ता साऽहं जनकपुत्रिका ।
स रामो मां यदाभ्येत्य ग्रहीष्यते सुमनोहरः ॥ ४४ ॥
तदावां मोचयामुग्रह्य नान्यथा वाक्यशोभिता ।
लीलया च सुखेनास्तां मद्गेहे मधुरालकौ ॥ ४५ ॥
इत्युक्तं तत्समाकर्ण्य पक्षिणौ भयमापतुः । परस्परं प्रमुमितौ जानकीमित्यवोचताम्
वयं वैपक्षिणःसाध्वि वनस्था वृक्षगोचराः । परिवभ्राम सर्वत्र नो सुखं नो भवेद्गृहे
अन्तर्वत्नी स्वके स्थाने गत्वा संसूय पुत्रकान् ।
त्वत्स्थानमागमिष्यामि सत्यं मे हृदितं वचः ॥ ४८ ॥
एवं प्रोक्ता तया सा तु न मुमोच शुकीं स्वयम् ।
तदा पतिस्तां प्रोवाच विनीतवदनुत्सुकः ॥ ४९ ॥
सीते मुञ्च कथं भार्यां रक्षसे मे मनोहराम् । भार्या गच्छाम्यविपिने विचराव सुखं वने
अन्तर्वत्नी तु वर्तते भार्या मम मनोरमा ।
तस्याः प्रसूतिं कृत्वा त्वामागमिष्यामि शोभने ! ॥ ५१ ॥
इत्युक्ता जानकी प्राह मुञ्चे नायं महामते ! ।

एतां रक्षामि सुखिनीं मत्पार्श्वे प्रियकारिणीम् ॥ ५२ ॥
इत्युक्तो दुःखितः पक्षी तामूचे करुणान्वितः ।
योगिभिः प्रोच्यते यद्वै तद्वचस्तथ्यमेव हि ॥ ५३ ॥
न वक्तव्यं न वक्तव्यं मौनमाश्रित्य तिष्ठताम् ।
नोचेत्स्व वाक्यदोषेण प्राप्नोत्यालानमुन्मदः ॥ ५४ ॥
वयं चेदत्र वाक्यं नाकरिष्याम नगोपरि । बन्धनं कथमावां स्यात्तस्मान्मौनं समाचरेत्
इत्युक्त्वा तां प्रत्युवाच नाहं जीवामि सुन्दरि ! ।
एतया भार्यया हीनस्तस्मान्मुञ्च मनोहरे ! ॥५६॥
अनेकविधवाक्यैः सा बोधिता नामुचत्तदा ।
कुपिता दुःखिता भार्या शशाप जनकात्मजाम् ॥ ५७ ॥
यथा त्वं पतिना सार्धं वियोजयसि मामितः ।
तथा त्वमपि रामेण वियुक्ता भव गर्भिणी ॥ ५८ ॥
इत्युक्तवत्यां तस्यां तु दुःखितायां पुनः पुनः । प्राणा निरगमन्दुःखात्पतिदुःखेन पूरितात्
रामं रामं स्मरन्त्याश्च वदन्त्याश्च पुनः पुनः ।
विमानमागतं दृष्ट्वा पक्षिणी स्वर्गता ययौ ॥ ६० ॥
तस्यां मृतायां तु खार्तो भर्ता तस्याः स पक्षिराट् ।
परमं क्रोधमापन्नो जाह्नव्यां दुःखितोऽपतत् ॥ ६१ ॥
यथा भवामि रामस्य नगरे जनपूरिते । मद्वाक्यादियमुद्विग्ना वियोगेन सुदुःखिता ॥
इत्युक्त्वा स पपातोदे जाह्नव्या भ्रमशोभिते ।
दुःखितः कुपितो भीतस्तद्वियोगेन कम्पितः ॥ ६३ ॥
शुकवृत्तपादुःखितस्याथ सीताया अपमाननात् ।
अन्त्यजत्वं परं प्राप्तो रजकः क्रोधनाभिधः ॥ ६४ ॥
यः क्रोधाच्च स्वकान्प्राणान्महतां दुष्टमाचरन् ।
त्यजत्येष मृतो याति अन्त्यजत्वं द्विजोत्तमः ॥ ६५ ॥

तस्मात्तं रजकोऽनयाऽसौ निन्दिता च वियोजिता ।
रजकस्य [redacted] शापेन वियुक्ता सा वनं गता ॥ ६६ ॥
एतत्ते कथितं विप्र यत्पृष्टं विदेहजाम् । पुनरत्र वरं पृष्टं शृणुष्व निगदामि तत् ।
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
रजकपाग्जन्मकथनं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः

### भरतस्य सीतात्यागाज्ञाऽस्वीकारे शत्रुघ्नायाज्ञाकरणम् ।

शेष उवाच ।

भरतं मूर्च्छितं दृष्ट्वा रघुनाथः सुदुःखितः । प्रतिहारमुवाचेदं शत्रुघ्नं प्रापयाशु माम् ।
तद्वाक्यं प्रोक्तमाकर्ण्य क्षणाच्छत्रुघ्नमानयत् । यत्र रामो निजभ्राता भरतेन सह स्थितः
भरतं मूर्छितं दृष्ट्वा रघुनाथं च दुःखितम् । प्रणम्य दुःखितोऽवोचत्किमिदं दारुणं महत्
तदा रामोऽन्त्यजप्रोक्तं वाक्यं लोकविगर्हितम् ।
तं प्रत्युवाच रामोऽसौ शत्रुघ्नं पदसेवकम् ॥ ४ ॥
अधोमुखो दीनरवो गद्गदाक्षरवेपथुः । शृणु भ्रातर्वचो मेऽद्य कुरु सत्क्षिप्रमादरात्
यथास्याह्विमला कीर्तिर्गङ्गेव पृथिवीं गता ।
सीताया वाच्यमतुलं लोके श्रुत्वाऽन्त्यजोदितम् ॥ ६ ॥
हातुमिच्छामि देहं स्वमेनां वा जानकीं किल ।
इति वाक्यं समाकर्ण्य रामस्य किल शत्रुहा ॥ ७ ॥
सवेपथुः पपातोर्व्यां दुःखितः परदारणः । संज्ञां प्राप्य मुहूर्तेन रघुनाथमवोचत्
शत्रुघ्न उवाच ।

किमेतदुच्यते स्वामिञ्जानकीं प्रति दारुणम् ।

पाखण्डैर्दुष्टचित्तैश्च सर्वधर्मबहिष्कृतैः ॥ ९ ॥
निन्दिता श्रुतिरग्राह्या भवति त्वग्रजन्मनाम् ।
जाह्नवी सर्वलोकानां पापघ्नी दुरितापहा ॥ १० ॥
निस्पृष्टा पापिभिः पुम्भिः सा स्पर्शे नार्हिता सताम् ।
सूर्यो जगत्प्रकाशाय समुदेति जगत्यहो ॥ ११ ॥
उलूकानां रविकरो न भवेत्तत्र का क्षतिः ।
तस्मात्त्वमेतां शृणु नीच्य मा त्यजानिन्दितां स्त्रियम् ॥ १२ ॥
श्रीराममद्रकृपया कुरुष्व वचनं मम । एतच्छ्रुत्वा वचस्तस्य शत्रुघ्नस्य महात्मनः ॥
न पुनर्जगादेदं यदुक्तं भरतम्प्रति । तन्निशम्य वचो भ्रातुर्दुःखपूरपरिप्लुतः ॥ १४ ॥
पपात मूर्च्छितो भूमौ छिन्नमूल इव द्रुमः ।
भ्रातरं पतितं वीक्ष्य शत्रुघ्नं दुःखितो भृशम् ॥ १५ ॥
प्रतिहारमुवाचेदं लक्ष्मणं त्वानयान्तिकम् । सलक्ष्मणगृहं गत्वा न्यवेदयदिदं वचः ॥

प्रतिहार उवाच ।

स्वामिन्नामो भवन्तं तु समाह्वयति वेगतः । स तच्छ्रुत्वा समाह्वानं रामचन्द्रेण वेगतः
जगाम सरसा तत्र यत्र सम्राट्कोऽनघः । भरतं मूर्च्छितं दृष्ट्वा शत्रुघ्नमपि मूर्च्छितम्
श्रीरामचन्द्रं दुःखार्तं दुःखितो वाक्यमब्रवीत् ।
किमेतद्दारुणं राजन्दृश्यते मूर्च्छनादिकम् ॥ १९ ॥
वदाशु शंस मां सर्वं कारणं मुख्यतोऽनघ ! । एवं वदन्तं नृपतिर्भ्रातरं सर्वमादितः ॥
शशंस लक्ष्मणं क्षिप्रं दुःखपूरपरिप्लुतम् ।
लक्ष्मणस्तद्वचः श्रुत्वा सीतायास्त्यागसम्भवम् ॥ २१ ॥
निःश्वसन्मुहुरुच्छ्वसंस्तब्धगात्र इवाऽभवत् ।
भ्रातरं स्तब्धगात्रं च कम्पमानं मुहुर्मुहुः ॥२२॥
न किञ्चन वदन्तं तं वीक्ष्य शोकार्दितोऽब्रवीत् ।
किं करिष्याम्यहं भूमौ स्थित्वा दुर्यशसाऽङ्कितः ॥ २३ ॥

त्यजामीदं वपुः धीमँल्लोकभीत्या न शोकवान् ।
*सर्वथा भ्रातरो मां मत्प्राणकरणोत्सुकाः ॥ २७ ॥
इदानीमितिऽपिशेषेण प्रतिकूलवचस्कराः । कुत्र गच्छामि कं यामि हसिष्यन्ति नृपा भुवि
दुःखशोकाश्रितं मां ये कुहितं रूपवन्नराः ।
ममोर्थदा पुरा भूता जाता जाता गुणाधिकाः ॥ २६ ॥
इदानीं मयि जाते नु विपरीतं बभूव तत् । इति सम्भाष्यमाणं तं रामभद्रं समीक्ष्य सः
संस्तम्भ्याऽश्रूणि विपुलान्युवाच विकलस्वरः ।
स्वामिन्विषादं मा कार्षीः कथं तव मतिर्हता ॥ २८ ॥
सीतामनिन्दितां को नु त्यजति श्रुतवान्भयात् ।
आकारयामि रजकं परिपृच्छामि सम्प्रति ॥ २९ ॥
कथं त्वया निन्दिता सा जानकी योषितां वरा ।
तव देशे बलात्कश्चिन्नु बाध्यते न जनोऽल्पकः ॥ ३० ॥
तस्मात्तस्य यथा स्यात्ते प्रतीतिः स्यात्तथाऽऽचर ।
किमर्थं त्यज्यते भीरुः पतिव्रतपरायणा ॥ ३१ ॥
मनसा वचसा नान्यं जानाति जनकात्मजा ।
तस्मादेनां गृहाण त्वमेतां मा त्यज जानकीम् ॥ ३२ ॥
ममोपरि कृपां कृत्वा मदुक्तं संश्रयाऽऽशु तत् । एवं वदन्तं प्रत्यूचे रामः शोकेन कर्शितः
लक्ष्मणं धर्मवाक्येन बोधयंस्त्यजनोद्यमः ॥ ३३ ॥

राम उवाच ।

कथं तु मां ब्रवीषि त्वं मा त्यजैनामनिन्दिताम् ।
लोकापवादात्त्यक्ष्येऽहं जानन्नपि विपापिनीम् ॥ ३४ ॥
स्वयशःकारणेऽहं स्वं देहं त्यक्ष्यामि शोभनम् ।
त्वामपि भ्रातरं त्यक्ष्ये लोकवादाद्विगर्हितम् ॥ ३५ ॥

---

* शोकवन्तो भ्रातरो मे कर्तव्यो मृदुचेतसः इति पुस्तकान्तरे पाठः ।

किमुतान्ये गृहा पुत्रा मित्राणि वसु शोभनम् ।
स्वयशः कारणे सर्वं त्यजामि किमु मैथिलीम् ॥ ३६ ॥
न तथा मे प्रियो भ्राता न कलत्रं न बान्धवाः ।
यथा मे विमला कीर्तिर्वल्लभा लोकविश्रुता ॥ ३७ ॥
इदानीं रजको नैव ( नाथ ) प्रष्टव्यो भवति ध्रुवम् ।
कालेन सर्वं भविता लोकचित्तस्य रञ्जनम् ॥ ३८ ॥
आमयो यद्वदामस्तु न चिकित्स्यो भवेत्क्षितौ ।
स कालेन परीपाकाद्व्रेपजाद्वेव नश्यति ॥ ३९ ॥

तथा कालेन सम्भापि साम्प्रतं माविलङ्घ्य । त्यजैनां विपिने साध्वीं मां वा खड्गेन घातय

इत्युक्तं वाक्यमाकर्ण्य दुःखितोऽभूत्तदा महान् ॥
चिन्तयामास च स्वान्ते लक्ष्मणः शोककर्शितः ॥ ४१ ॥
पित्राऽऽज्ञप्तो जामदग्न्यो मातरं चाप्यघातयत् ।
गुरोराज्ञा नैव लङ्घ्या युक्ताऽयुक्ताऽपि सर्वथा ॥ ४२ ॥

तस्मादेनां त्यजाम्येव रामस्य प्रियकाम्यया । इति सञ्चिन्त्य मनसि भ्रातरं प्रत्युवाच सः

लक्ष्मण उवाच ।

अकार्यमपि कार्यं वै गुरूणां नैव लङ्घयेत् । तस्मात्कुर्वे भवद्वाक्यं यत्त्वं वदसि सुव्रत !

इत्येवं भाषमाणं तं लक्ष्मणं प्रत्युवाच सः ।
साधु साधु महाप्राज्ञ ! त्वया मे तोषितं मनः ॥ ४५ ॥

अद्यैव रात्रौ जानक्या दोहदस्तापसीक्षणे । तन्मिषेण रथे स्थाप्य मोचयैनां महावने ॥
इत्थं भाषितमाकर्ण्य विशुष्यद्वदनोऽभितः । छन्नान्तःकरणो मुह्यञ्जगाम स्वं निवेशनम्
सुमन्त्रं तु समाहूय वचनं तमथाऽब्रवीत् । रथं मे कुरु सज्जं वै सदश्ववरभूषितम् ॥
स तद्वाक्यं समाकर्ण्य रथमानीतवांस्तदा । आनीतं तं रथं दृष्ट्वा लक्ष्मणः शोककर्शितः
परमं दुःखमापन्नः संस्तभ्य स्यन्दनं परम् । निःश्वसञ्जानकीगेहं प्रतस्थे प्राग्भवेषकः ॥

---

* 'सदश्वाम्बरभूषितम्' इति आनन्दाश्रम पुस्तके पाठः ।

गत्वा चान्तःपुरे भ्राता रामस्य मिथिलात्मजाम् ।
प्रत्यूचे निःश्वसन्वाक्यं दुःखपूर्णपरिप्लुतः ॥ ५७ ॥

मातर्जानकि ! रामेण प्रेषितो भवनं तव । तापसीः प्रति याहि त्वं दोहदप्राप्तिहेतवे ॥
इति वाक्यं समाकर्ण्य लक्ष्मणस्य विदेहजा । परमं हर्षमापन्ना लक्ष्मणं प्रत्यभाषत ॥

जानक्युवाच ।

धन्याहं मैथिली राज्ञी रामस्य चरणस्मरा । यस्या दोहदपूर्त्यर्थं प्रेषयामास लक्ष्मणम्
यथाऽद्य ता वनचरीस्तापसीः पतिदेवताः । समभ्युत्थ्य वासोभिः पूजयामि मनोहरैः†
इत्युक्त्वा रत्नवस्त्राणि महाभरणानि च । मणीन्विमलमुक्ताश्च कर्पूरादिसुगन्धिनम्
चन्दनादिकवस्तूनि विचित्राणि सहस्रधा । जग्राह रघुनाथस्य पत्नी* स्वप्रियकाम्यया

सीता गृहीत्वा सर्वाणि दासीनां करयोर्मुहुः ।
लक्ष्मणं प्रतिगच्छन्ती वैक्लव्यं चास्खलत्तदा ॥ ५८ ॥

अविचार्य सती तस्माल्लक्ष्मणं प्रियकारिणम् । उवाच कुत्र स रथो येन मां प्रापयिष्यसि

स निःश्वसन्रथं हैमं जानक्या सह निर्विशन् ।
सुमन्त्रं प्रत्युवाचासौ चालयाश्वान्मनोजवान् ॥ ६० ॥
स (सु) सुयुक्तं रथं वाक्याल्लक्ष्मणस्य [illegible] चालयन् ।
अश्रुपूर्णमुखं पश्यल्लक्ष्मणं स मुहुर्मुहुः ॥ ६१ ॥
आहतास्तेन कशया वाहास्तस्यापतन्पथि ।
[illegible] चलन्ति यदा वाहास्तदा लक्ष्मणमब्रवीत् ॥ ६२ ॥

सुमन्त्र उवाच ।

स्वामिंश्चलन्ति नो वाहा यत्नेन परिचालिताः ।
किं करोमि न जानेऽत्र कारणं वाहपातने ॥ ६३ ॥

एवं प्रवदन्तं प्रत्यूचे लक्ष्मणो गद्गदस्वरः । सारथिं धैर्यमास्थाय ताडयैतान्कशादिभिः
एतच्छ्रुत्वोदितं यन्ता कथञ्चित्समचालयत् । तदाऽस्फुरद्दक्षनेत्रं जानक्या दुःखशंसकम्

---

* प्रियकरी परा इति आनन्दाश्रम पुस्तके पाठः † मनोहरान्-इति च पाठः ।

तदैव हृदये शोकः समभूद्दुःखशंसकः । तदैव पक्षिणः पुण्याः कुर्वन्ति परिवर्तनम् ॥
एवं वीक्ष्यैव वैदेही प्रत्युवाचाथ देवरम् । कथं मे तापसीक्षायै यातुमिच्छा रघूद्वह !
रामे भूयाद्धि कल्याणं भरते वा तथानुजे । त्वप्रजासु च सर्वत्र मा भवन्तु विपर्ययाः
एवं ब्रुवन्तीं सम्वीक्ष्य जानकीं च स ( स तु ) लक्ष्मणः ।
न किञ्चिदुक्तवान्रुद्धकण्ठो बाष्पप्रपूरितः ॥ ६९ ॥
सा गच्छन्ती मृगान्वामपरिवर्तनकारकान् । अपश्यद्दुःखसङ्घातकारकान्समभापत
अथ यन्मे मृगा वामं वर्तयन्ति तदिष्यते ।
श्रीरामचरणौ मुक्त्वा गच्छन्त्या युक्तमेव तत् ॥ ७१ ॥
महिलानां परो धर्मः स्वभर्तृचरणार्चनम् । तन्मुक्त्वाऽन्यत्र यान्त्या मे यद्भवेद्युक्तमेव तत्
एवं पथि विचारं तु कुर्वन्त्या परमार्थतः । जाह्नवी ददृशे देव्या मुनिवृन्दैकसेविता ॥
यस्यां जलस्य कल्लोला दृश्यन्ते दुग्धसन्निभाः ।
तरङ्गो दृश्यते यत्र स्वर्गसोपानमूर्तिभृत् ॥ ७४ ॥
यस्या वारिकणस्पर्शान्महापातकसञ्चयः । पलायते न कुत्रापि स्थानमीक्षन्समन्ततः
गङ्गां प्राप्याऽथ सौमित्रिर्जानकीं स्यन्दने स्थिताम् ।
उवाच निर्गलद्बाष्प एहि सीते ! रथाद्भुवि ॥ ७६ ॥
सीता तद्वाक्यमाकर्ण्य क्षणादवततार सा ।
लक्ष्मणेन धृता बाहौ स्खलन्ती पथि कण्टकैः ॥ ७७ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
जानक्या गङ्गादर्शनं नामाष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः

### सीतालक्ष्मणगम्यादवर्णनम् ।

शेष उवाच ।

अथ नावा समुत्तीर्य जाह्नवीं लक्ष्मणस्तदा । जानकीं परमार्तारे दुःखं धृत्वा वनं ययौ
सा चलन्ती पथि तदा शुष्यद्दलनलक्षिता । कण्टकक्षतपादाब्जा स्खलन्ती च पदे पदे

लक्ष्मणस्तां महाघोरे विपिने दुःखदायिनि ।
प्रवेशयामास तदा राघवाज्ञाविधायकः ।
यत्र वृक्षा महाघोरा बर्बुराः खदिरघनाः ( घनाः ) ॥ ३ ॥
श्लेष्मातकाश्चिञ्चिणीकाः शुष्का दावेन वह्निना ॥ ४ ॥

कोटरस्था महासर्पाः फूत्कुर्वन्ति सुकोपिताः । घूका घूत्कुर्वते यत्र लोकविस्मयकृत्पुरः

व्याघ्राः सिंहाः शृगालाश्च द्वीपिनोऽतिभयङ्कराः ।
दृश्यन्ते यत्र सबला ( मत्तहनाः ) मनुष्यादाः सुकोपनाः ॥ ६ ॥

महिषाः शूकरा दुष्टा दंष्ट्राद्वयविलक्षिताः । कुर्वन्ति प्राणिनां तापं मानसस्य महोद्धुपः
ईदृग्वनं प्रपश्यन्ती भयेनोपगतज्वरा । कण्टकैर्दुष्टचरणा लक्ष्मणं वाक्यमब्रवीत् ॥ ८ ॥

जानक्युवाच ।

वीरर्षिमुनिसंसेव्यानाश्रमान्नेत्रसौख्यदान् । नाहं पश्यामि नो तेषां पत्नीश्च सुतपोधनाः
पश्यामि केवलं घोरान्पक्षिणः शुष्कवृक्षकान् । दावानलेन तत्सर्वं दह्यमानमिदं वनम्
त्वां च पश्यामि दुःखार्तमश्रुपूर्णाकुलेक्षणम् । शकुनेतरसाहस्रं भवेन्मम पदे पदे ॥ ११
तन्मे कथय वीराग्र्य ! कथं मुक्ता महात्मना । रामेण दुष्टहृदया क्षिप्रं कथय मे हि तत्

इति वाक्यं समाकर्ण्य लक्ष्मणः शोककर्शितः ।
संरुद्धवाष्पवदनो ( नयनो ) न किञ्चित्प्रोक्तवांस्तदा ॥ १३ ॥

[illegible] । पुनरप्याह तं वीरं दुःखार्ता पश्यती मुखम्

तदापि स न तां वक्ति किमपि प्रेक्षुलोलुपः । तदा सात्यन्तनिर्बन्धं चकार परिपृच्छती आग्रहेण यदा पृष्टो लक्ष्मणः सीतया तदा । रुद्धकण्ठो मुहुः शोचन्नवदत्त्यागसम्भवम् तद्वाक्यं पविना तुल्यं निशम्य मुनिसत्तम ! । लुलता कृत्तमूलेव बभूवाऽऽकल्पवर्जिता

तदैव पृथिवी मां न जग्राह स्तनपामिमाम् ।
रामो विपापिनीं सीतां न जह्यादिति शङ्किनी ॥ १८ ॥
पतितां तां [illegible] वैदेहीं दृष्ट्वा सौमित्रिरुत्सुकः ।
पल्लवान्त ( प्र ) समीरेण संज्ञितां तु चकार सः ॥ १९ ॥

संज्ञां प्राप्ता ह्युवाचेदं मा हास्यं कुरु देवर ! । कथं मां पापरहितां त्यजते स रघूद्वहः

एवं बहु विलप्याऽथ लक्ष्मणं दुःखसंयुतम् ।
समीक्ष्य मूर्च्छिता भूमौ पपात परिदुःखिता ॥ २१ ॥

मुहूर्तेनापि संज्ञां सा प्राप्य दुःखपरिप्लुता । जगाद रामचरणौ स्मरन्ती शोकविह्वला आनकमुपाच ।
रघुनाथो महाबुद्धिस्त्यजते मां कथं महान् । यो मदर्थे पयोराशिं बबन्धान्वानरैर्युतः ॥

स कथं मां महावीरो निष्पापां रजकोक्तितः ।
त्यजिष्यति ममैवात्र दैवं तु प्रतिकूलितम् ॥ २४ ॥
एवं वदन्ती पुनरपि मूर्च्छां प्राप्ता विदेहजा ।
मूर्च्छितां तां समीक्ष्याथ रुरोद विहृतस्वरः ॥ २५ ॥

पुनः संज्ञामवाप्यैवं सौमित्रिं निजगाद सा । दुःखातुरं वीक्षमाणाश्रुद्धकण्ठं सुदुःखिता

सौमित्रे गच्छ रामं त्वं धर्ममूर्तिं यशोनिधिम् ।
मद्वाक्यमेवैतत्तु भूपाः समस्तं तपसां निधेः ॥ २७ ॥

मां त्यजाऽत्र भवान्यद्वै जानन्नपि विपापिनीम् । कुलस्य सदृशं वाराकरहानस्य तत्त्वतम्

नित्यं तव पदे रक्तां त्वदुच्छिष्टभुजं हि माम् ।
भयोत्तस्मात्त तत्सयं मम दैवं तु कारणम् ॥ २९ ॥

कल्याणं तव सर्वत्र भूयाद्वीरवरोत्तम ! । अहं तावद्वने त्वां हि स्मरन्ती प्राणधारिका

गता कर्णपथा वार्ता यथानैव ममोत्तमः । मन्ये गुर्व्यादिमाः सर्वे मनसा रघुनंदन ! ॥
वने मधे यथानेव पतितुं नाम्मही(हि)वत ! । इत्यादश्रव्यवाणानिकल्पनाया मनोऽर्पणं ॥
अथ श्रुत्वा ब्रूहि सत्यं मत्सन्देशं रघूत्तम ! । त्यक्ता वने महाघोरे रामेण निरघा सती ॥
स्मरामि चरणौ शुभ्यादने मृगगणैर्युते । अन्तर्वत्नी वने त्यक्ता रामेण सुमहात्मना ॥
सौमित्रे ! शृणु मद्वाक्यं मद्गृ मृगाद्युत्तमे । इदानीं सन्त्यजे प्राणानुग्रवीर्यं शुभव्रतः
इदं रामवचनं सत्यं यत्करोषि शुभं तव । परन्त्वत्र तत्कार्यं रामपादाब्जसेविना ॥

गच्छ त्वं रामसविधे शिवाः पन्थान एव ते ।
ममोपरि कृपा कार्या स्मर्तव्याऽहं कदा कदा ॥ ३७ ॥
इत्युक्तया मूर्च्छिता भूमौ पपात पुरतस्तदा ( स्ततः ) ।
लक्ष्मणो दुःखमापेदे वीक्ष्य मूर्च्छितजानकीम् ॥ ३८ ॥

वीजयामास वासोभिःसंज्ञाप्ताऽऽसौ प्रणम्य च । सौमित्रिःसान्त्वयामास वचनैर्मधुरैर्मुहुः

लक्ष्मण उवाच ।

एष गच्छामि रामं वै गत्वा शंसामि सर्वशः । समीपे ते मुनेरस्ति वाल्मीकेराश्रमो महान्
इत्युक्त्वा तां परिक्रम्य दुःखितोऽयाप्यपूरितः । मुञ्चन्नश्रुकलाद्दुःखाद्ययौ रामं महीपतिम्
जानकी देवरं यान्तं वीक्ष्य विस्मितलोचना । इसत्ययं महाभागो लक्ष्मणो देवरो मम

कथं मां प्राणतः प्रेष्ठां प्रियायां राघवोऽत्यजत् ।
इति सञ्चिन्तयन्ती सा समीक्षितानिमेषणा ( समीक्षत्निमेषणा ) ॥ ४३ ॥
जाह्नवीं सर्वयोर्सीणां ज्ञात्वा सत्यं स्वहापनम् ।
पतिता प्राणसन्देहं प्राप्ता मूर्च्छाऽऽगता तदा ॥ ४४ ॥

तदा हंसाः स्वपक्षाभ्यां जलमानीय सर्वतः । सिषिचुर्मधुरोषायुर्वधौ पुष्पसुगन्धिमान्
करिणः पुष्करैः स्वीयैर्जलपूर्णैः समन्ततः । व्याप्तं शरीरं रजसा क्षालयन्त इवाऽऽगताः

मृगास्तदन्तिकं प्राप्य सन्तस्थुर्विस्मितेक्षणा ।
नगाः पुष्पयुता आसंस्तत्कालं मधुना विना ॥ ४५ ॥

एतस्मिन्समये वृत्ते संज्ञां प्राप्य सती तदा । विललाप सुदुःखार्ता रामरामेति जल्पती

हा नाथ ! दीनबन्धो हे करुणावरुणालय निधे । अपराधादृते मां त्वं कथं त्यजसि वै वने
इत्येवमादिभाषन्ती विलपन्ती मुहुर्मुहुः । इतस्ततः प्रपश्यन्ती संमूर्च्छन्ती पुनःपुनः ॥

तदा स्वशिष्यैर्भगवान्वाल्मीकिः सङ्गतो वनम् ।
शुश्राव रुदितं तत्र करुणास्वरभाषितम् ॥ ५१ ॥

शिष्यान्प्रतिजगादाथ पश्यन्तु वनमध्यतः । को रोदिति महाघोरे विपिने दुःखितस्वरः
ते प्रयुक्ताश्च मुनिना सञ्जग्मुर्यत्र जानकी । रामरामेति भाषन्ती बाष्पपूरपरिप्लुता ॥

तां दृष्ट्वा स्त्रियमौत्सुक्याद्वाल्मीकिं प्रत्यगुर्मुनिम् ।
श्रुत्वा तद्गीरितं वाक्यं जगामाऽऽसौ ततो मुनिः ॥ ५४ ॥

दृष्ट्वा तं तपसां राशिं जानकी पतिदेवता । नमोऽस्तु मुनये वेदमूर्तये व्रतधार्यये ॥

इत्युक्तवन्तीं तां सीतामाशीर्भिरभ्यनन्दयत् ।
भर्त्रा सह चिरं जीव पुत्रौ प्राप्नुहि शोभनौ ॥ ५६ ॥

काऽसि त्वं किं वने घोरे सङ्गताऽसि किमीदृशी ।
सर्वं मे शंस जानीयां तव दुःखस्य कारणम् ॥ ५७ ॥

सा तदा प्रत्युवाचेमं रामस्य महिलामुनिम् । निःश्वसन्ती करुणया गिरा सञ्जातवेपथुः

शृणु मे वाक्यमर्थोक्तं सर्वदुःखस्य कारणम् ।
जानीहि मां भूमिपते ! रघुनाथस्य सेविकाम् ॥ ५६ ॥

अपराधं विना त्यक्ता न जाने तत्र कारणम् । लक्ष्मणो मां विमुच्यात्र गतवाञ्छ्रावयाशया

इत्युक्त्वाऽश्रुकलापूर्णं बिभ्रती मुखपङ्कजम् ।
वाल्मीकिः सान्त्वयन्नाह जानकीं कमलेक्षणाम् ॥ ६१ ॥

वाल्मीकिरुवाच ।

वाल्मीकिं मां विजानीहि पितुस्तव गुरुं मुनिम् ।
दुःखं मा कुरु वैदेहि ! ह्यागच्छ मम चाऽऽश्रमम् ॥ ६२ ॥

मित्रस्थाने पितुर्गेहं जानीहि पतिदेवते । ईदृशे कर्मणि मम रोषोऽस्त्येव महीपतेः ॥
एवं वचः समाकर्ण्य जानकी पतिदेवता । दुःखपूर्णाऽश्रवदना किञ्चित्सुखमवाप सा ॥

शेष उवाच ।

वाल्मीकिः सान्त्वयित्वैनां दुःखपूर्णाफुल्लेक्षणाम् ।
निनाय स्वाश्रमं पुण्यं नानर्षिवृन्दपूरितम् ॥ ६५ ॥

सा गच्छन्ती पृष्ठतोऽस्य वाल्मीकेस्तपसांनिधेः। व्याजेन्द्रैः पृष्ठगा वै तारेव मनोहरा

वाल्मीकिः प्राप्य च स्वीयमाश्रमं मुनिपूरितम् ।
तापसीःप्रतिसञ्जग्मौ जानकीं स्वाश्रमं गताम् ॥ ६७ ॥

वैदेही तापसीःसर्वा नमश्चक्रे महामनाः । परस्परं प्रहृष्य ताःपरिरम्भं समाचरन् ॥

वाल्मीकिर्निजशिष्यान्स प्रत्युवाच तपोनिधिः ।
रच्यतां यत्र जानक्याः पर्णशाला मनोरमा ॥ ६९ ॥

इत्युक्तं वाक्यमाकर्ण्य वाल्मीकेः सुमनोरमम् ।
व्यरचन्पत्रपैः शालां दारुभिः सुमनोहराम् ( सुमनोरमाम् ) ॥ ७० ॥

तत्रावसद्धि वैदेही पतिव्रतपरायणा । वाल्मीकेः परिचर्यां च कुर्वन्ती फलभक्षिका ॥ *जपन्तीरामरामेति मनसा वचसा स्वयम् । निनाय दिवसांस्तत्र जानकी पतिदेवता ॥ काले साऽसूत पुत्रौ द्वौमनोहरवपुर्धरौ । रामचन्द्रप्रतिनिधी ह्यश्विनाविव जानकी ॥

तच्छ्रुत्वा तु मुनिर्हृष्टो जानक्याः पुत्रसम्भवम् ।
चकार जातकर्मादि संस्कारान्मन्त्रवित्तमः ॥ ७४ ॥

कुशैर्लवैश्च वाल्मीकिर्मुनिःकर्माणि चाऽऽचरत् ।
तन्नाम्ना पुत्रयोराख्या कुशोलव इति स्फुटा ॥ ७५ ॥

वाल्मीकिर्यत्र विरजा मङ्गलं तदथाचरत् । अत्यन्तं हृष्टचित्ता सा बभूव कमलेक्षणा ॥ तद्दिने लवणं हत्वा शत्रुघ्नःस्वल्पसैनिकः। आगमच्चाश्रमे चास्य वाल्मीकेर्निशि शोभने

तदा वाल्मीकिना शिष्टःशत्रुघ्नो रघुनायकम् ।
मा शंस जानकीपुत्रौ कथयिष्याम्यहं पुरः ॥ ७८ ॥

जानकीपुत्रकौ तत्र ववृधाते मनोरमौ । कन्दमूलफलैः पुष्टौ व्यवर्धतामुन्मदौ वरौ ।

१. "राम जपन्त्याशु" इत्यानन्दाश्रमपुस्तके पाठः ।

शुक्लप्रतिपदायाश्च शशीव सुमनोहरौ । कालेन संस्कृतौ जातावुपनीतौ मनोहरौ ॥
उपनीय मुनिर्वेदं साङ्गमध्यापयत्सुतौ । सरहस्यं धनुर्वेदं रामायणमपाठयत् ॥ ८१ ॥
वाल्मीकिना च धनुषी दत्ते स्वर्णसुभूषिते । अभेद्ये सगुणे श्रेष्ठे वैरिवृन्दविदारणे ॥
इषुधी बाणसम्पूर्णे अक्षये करवालके ।
चर्माण्यभेद्यानि ददौ जानक्यात्मजयोस्तदा ॥ ८३ ॥
धनुर्धरौ धनुर्वेदपारगावाश्रमे मुदा । चरन्तौ तत्र रेजाते (ह) मश्विनाविव शोभनौ ॥
जानकी वीक्ष्य पुत्रौ द्वौ खड्गचर्मधरौ वरौ । परमं हर्षमापन्ना विरहोद्भवमत्यजत् ॥
एव ते कथितो विप्र ! जानक्याः पुत्रसम्भवः । अतःशृणुष्व यद्वृत्तं वीरयोरुपिहन्तनम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे कुशलवोत्पत्तिकथानकं नामैकोनषष्टितमोऽध्यायः ॥५९॥

---

## षष्टितमोऽध्यायः

### शत्रुघ्नसेनानिनः कालजितः लवेनयुद्धवर्णनम् ।

शेष उवाच ।

शत्रुघ्नो निजवीराणां छिन्नबाहून्निरीक्षयन् । उवाच तान्सुकुपितो रोषसन्दंशिताधरः
केन वीरेण वो बाहुकृन्तनं समकारि भोः । तस्याहं बाहुकृन्तामि देवगुप्तस्य वै भटाः
न जानाति महामूढो रामचन्द्रबलं महत् ।
इदानीं दर्शयिष्यामि पराक्रमस्य फलं स्वकम् ॥ ३ ॥
॥ कुत्र वर्तते वीरो दशः कुत्र मनोरमः । को वाऽगृह्णात्सुमनसां मूढोऽज्ञात्वा पराक्रमम्
इति ते कथिता वीरा विस्मिता दुःखिता भृशम् ।
रामचन्द्रप्रतिनिधिं बालकं समशंसत ॥ ५ ॥
तच्छ्रुत्वा रोषसम्भारो बालकेन हयग्रहम् । सेनान्यं वै कालजितमाज्ञापयदुरुत्सुकः ॥

* 'हयं हृतम्' इत्यपि पाठ आनन्दाश्रम पुस्तके ।

शत्रुघ्न उवाच ।

सेनानीःसकलां सेनां व्यूहयस्व ममाऽऽज्ञया । रिपुःसम्प्रति गन्तव्यो महा

नायं बालो हरिर्नूनं भविष्यति हयन्धरः ।

अथवा त्रिपुरारिः स्यान्नान्यथा मद्धयापहृत् ॥ ८ ॥

अवश्यं कदनं भावि सैन्यस्य बलिनो महत् ।

स्वच्छन्दचरितैः खेलन्नास्ते निर्भयधीःशिशुः ॥ ९ ॥

गन्तव्यमस्माभिःसन्नद्धैः रिपुर्दुर्जयैः । एतन्निशम्य वचनं शत्रुघ्नस्य स

सज्जीचकार सेनां तां दुर्व्यूढां चतुरङ्गिणीम् ।

सज्जां तां शत्रुजिद्दृष्ट्वा चतुरङ्गयुतां पराम् ॥ ११ ॥

गपयत्ततो गन्तुं यत्र बालो हयन्धरः । सा चचाल तदा सेना चतुरङ्ग

यन्ती महीभागं त्रासयन्ती रिपून्बलात् । सेनानीस्तं ददर्शाऽथ बालकं र

ायं रामप्रतिममब्रवीद्वचनं हितम् । बाल ! मुञ्च हयश्रेष्ठं रामस्य बलशा

सेनानीः कालजिन्नाम तस्य भूपस्य दुर्मदः ।

त्वां रामप्रतिमं दृष्ट्वा कृपा मे हृदि जायते ॥ १५ ॥

अन्यथा तव मे दोःस्थ्याज्जीवितं न भविष्यति ।

एतद्वाक्यं समाकर्ण्य शत्रुघ्नस्य भटस्य हि १६ ॥

जहास किञ्चित्सक्रोधमाचुचाव च यनोऽद्भुतम् ।

गच्छ मुक्तोऽसि तं रामं कथयस्व हयम्मदम् ॥ १७ ॥

त्वत्तो बिभेमि नो शूर वाक्येन मयशालिना ।

ममाऽत्र गणना नास्ति त्वादृशाः कोटयो यदि ॥ १८ ॥

वाक्यसादेन मूर्छीभूता न संशयः । कालजित्तव यन्नाम मत्ताऽकारि म

पदविस्तरसम्येव वर्णनो न च दर्पणः ।

दर्शयस्वाऽधुना वीर्यं स्वनाम बलविक्रमः ॥

शेष उवाच ।

वाक्यैःपविनातुल्यैर्भिन्नःसुभटशेखरः । चुकोप हृदयेऽत्यन्तं जगाद वचनं पुनः ।

कालजिदुवाच ।

कस्मिन्कुले समुत्पत्तिः किन्नामासि च बालक ! ।
त्वन्नाम नाभिजानामि कुलं शीलं वयस्तथा ॥ २२ ॥

पादचारं रथस्थोऽहमधर्मेण कथं जये । तदाऽत्यन्तं कुपितो जगाद वचनं पुनः ॥२३॥

लव उवाच ।

कुलेन किं च शीलेन नाम्ना वा सुमनोहता ( वयसा भट ! ) ।
लवोऽहं लवतः सर्वाञ्जेष्यामि रिपुसैनिकान् ॥ २४ ॥

इदानीं त्वामपि भटं करिष्ये पादचारिणम् । इत्यमुक्त्वा धनुःसज्यं चकार स लवोबलं
टङ्कारयामास तदा वीराणाकम्पयन्हृदि । वाल्मीकिं प्रथमं स्मृत्वा जानकीं मातरं लव

मुमोच बाणाग्निशितान्सद्यः प्राणापहारिणः ।
कालजित्स्वधनुः कृत्वा सज्यं ( ज्यां ) कोपसमन्वितः ॥ २७ ॥
ताडयामास जघनो लवं रणविशारदः ।
तद्बाणाञ्छतधा छित्वा क्षणाद्वेगात्कुशानुजः (ग) ॥ २८ ॥
सेनानीं चक्रे विरथं ( बहुभिः ) वसुभिः स्वशिरोत्तमैः ( स्वशरोत्तमैः ) ।
विरथो गजमानीतमारुरोह भटैर्निजैः ॥ २९ ॥

मदोन्मत्तं महावेगं सप्तधा प्रस्रवान्वितम् । गजारूढं तु तं दृष्ट्वा दशभिर्धनुयोगतैः ।
बाणैर्विव्याध विहसन्सर्वान्रिपुगणाञ्जयी ।
कालजित्तस्य वीर्यं तु दृष्ट्वा विस्मितमानसः ॥ ३१ ॥

गदां मुमोच महतीं महायसविनिर्मिताम् । आपतन्तीं गदां वेगाद्भारायुतविनिर्मिताम्
त्रिधा चिच्छेद तरसा क्षुरप्रैः स कुशानुजः । परिघं निशितं घोरं वैरिप्राणहरोदितम्
मुक्तं पुनस्तेन लवश्चिच्छेद तरसाऽन्वितः । छित्वा तत्परिघं घोरं कोपादारक्तलोचन
गजोपस्थे समारूढं मन्यमानश्चुकोप ह । तत्क्षणाद्च्छिन्नस्तस्य शुण्डां खड्गेन दन्तिन

दन्तयोश्चरणौ धृत्वाऽऽरुरोह गजमस्तके । मुकुटं शतधा कृत्वा कवचं [illegible] सहस्रधा ।
केशेष्वाकृष्य सेनान्यं पातयामास भूतले । पातितःसगजोपस्थात्सेनानीः कुपितःपुनः
हृदये ताडयामास मुष्टिना वज्रमुष्टिना । स आहतो मुष्टिभिस्तु क्षुरप्रान्निशिताञ्छरान्

मुमोच हृदये क्षिप्रं कुण्डलीकृतधन्वयान् ।
स रराज रणोपान्ते कुण्डलीकृतचापवान् ॥ ३६ ॥

शिरस्त्रं कवचं चिच्छेदमेयं शरकोटिभिः। स विद्धः सायकैस्तीक्ष्णैस्तं हन्तुं खड्गमाददे

दशाग्रोणात्स्यड्शनाग्निःश्वशन्नुच्छसन्मुहुः ।
खड्गहस्तं समायान्तं शूरं सेनापतिं लवः ॥ ४१ ॥
चिच्छेद भुजमध्यं तु सखड्गं पाणिरापतत् ।
छिन्नं खड्गधरं हस्तंवीक्ष्यकोपाच्चमूपतिः ॥ ४२ ॥
वामेन गदया हन्तुं मचक्राम भुजेन तम् ।
सोऽपिच्छिन्नोभुजस्तस्यसाङ्गदस्तीक्ष्णसायकैः ॥ ४३ ॥

तदा प्रकुपितो वीरः पादाभ्यामहनल्लवम् । लवः पादाहतस्तस्य न चचाल रणाङ्गणे ।
स्रजा हतो द्विप इव चरणच्छेदनं व्यधात् ।तदाऽपि तं मौलिनाऽसौ प्रहर्तुमुपचक्रमे ।
तदा लवश्चमूनाथं मन्यमानोऽधिपौरुषम् । करवालं समादाय करे कालानलोपमम्
अच्छिनच्छिर एतस्य महामुकुटशोभितम् । हाहाकारो महानासीच्चमूनाथे निपातिते
सैनिकाःपरितःक्रुद्धा लवं हन्तुं समागताः । लवस्तान्स्वशराघातैःपलायनपरान्व्यधात्

छिन्ना भिन्नाङ्गकाः केचित्तु गताः केचिद्रणाङ्गणात् ।
स निवार्यांस्तिलान्योधान्विजगाह चमूं मुदा ॥ ४६ ॥
वाताद्दय इव निःस्वस्य प्रलये (पु) स्तु महार्णवम् ।
गजा भिन्नाद्रिया जातामौक्तिकैःपूरितामही ॥ ५० ॥

दुर्गमाऽभूद्रणटाव्यूर्णो पर्वतैर्व्याप्ता यथा । अश्वाःकनकपल्याणा रुचिरा रत्नतब्धित
अपतन्नपिता प्लुते हरे चलसुशोभिताः । रथिनः करमध्यस्थधनुर्दण्डसुशोभिन (रम
रथोपस्थे निपतिताः स्वर्गगा इव ये सुराः । सम्वर्णोष्ठपुत्रा यत्रयत्रमहाहमीचिरश्विन

पतितास्तत्र दृश्यन्ते वीरा रणविशारदाः । सुस्राव शोणितसरिद्ध्वमस्तककच्छपा

महाप्रवाहललि( सि ) ता वैरिणां भयकारिका ।

केषां चिद्बाहवश्छिन्नाःकेषां पादा विकर्तिताः ॥ ५५ ॥

केषां कर्णाश्च नासाश्च केषां कवचकुण्डले । एवं तु कदनं जातं सेनान्यां पतिते र

सर्वे निपतिता वीरा न केचिज्जीविताम्ततः ।

लवो जयं रणे प्राप्य वैरिवृन्दं विजित्य च ॥ ५७ ॥

अन्यागमनशङ्कायां मनःकुर्वन्नवैक्षत । केचिदुर्वरिता युद्धाद्भाग्येन न रणे मृताः

शत्रुघ्नसविधे जग्मुः शंसितुं वृत्तमद्भुतम् । गत्वा ते कथयामासुर्यथावृत्तं रणाङ्गणे

कालजिन्निधनंबालाद्विस्मयकारिरणोद्यमम् । तच्छ्रुत्वा विस्मयं प्राप्तःशत्रुघ्नस्तानुवाच

हसन्मोपाहुदशन्दन्तान्बालप्राहृदयं स्मरन् । रे वीराःकिं मद्योन्मत्ता यूयं किंवाछलमहा

किंवा वैकल्यमाप्तास्तं कालजिन्मरणं कथम् ।

यः सङ्ख्ये वैरिवृन्दानां दारुणः समितिञ्जयः ॥ ६२ ॥

तं कथं बालको जीवाघमस्याविद्रुरासदम् । शत्रुघ्नवाक्यंसंश्रुत्यवीराःप्रोचुरसृक्प्लुता

नास्माकं मद्यमत्तादि न च्छलो न च देवनम् ।

कालजिन्मरणं सत्यं त्वाज्ञानीहि भूपते ! ॥ ६४ ॥

बलं च कृत्स्नं मथितं बालेनातुलशौण्डिना । अतःपरं [ ] यत्कार्यं ये प्रेष्या नृवरोत्तमा

बालं ज्ञात्वा भयान्नाऽत्र करोतु बलसाहसम् । इतिश्रुत्वा वचस्तेषां वीराणां शत्रुहा तद

सुमतिं च मतिश्रेष्ठमुवाच रणकारणे ॥ ६७ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे

कुशलवयुद्धे सैन्यपराजयकालजित्सेनानीमरणं नाम षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः

### शत्रुघ्नलवयोर्युद्धसंग्रामवर्णनम् ।

शत्रुघ्न उवाच ।

जानासि किं महाप्राज्ञ कस्य बालो हयमाहरत् । येन मे सचिवं सर्वं बलं चापि विनिर्जितम्

सुमतिरुवाच ।

स्वामिन्नयं मुनिश्रेष्ठवाल्मीकेराश्रमो महान् ।

क्षत्रियाणामत्र वासो नास्त्येव परतापन ॥ २ ॥

इन्द्रो भविष्यति परमम(ह)र्षी हयमाहरत् । पुरारिर्वान्यथा वाहं तव कः समुपाहरेत् ।
कालजिच्चेन नाशं ये प्राप्ताः परमदारुणाः । तं प्रति श्रीमहाराज । गन्ता कः पुरुषान्वितः
स्वं च वीरैर्भटैः सर्वै राजभिः परिवारितः । तत्र गच्छस्व सैन्येन महताशत्रुहन्तः ।

गत्वा सञ्जीवितं वीरं बद्ध्वा तु कुलपालिने ।

दर्शयिष्यामि रामाय मतं [illegible] त्विदमाहृतम् ॥ ६ ॥

इति वाक्यं समाकर्ण्य वीरान्सर्वान्समादिशत् । सैन्येन महतायात यूयमायामि पृष्ठ
निर्दिष्टास्ते क्षणाद्वीरा जग्मुर्यत्र लवो बली । धनुर्विस्फारयंस्तत्र सुदृढं गुणपूरितम्
आयातं तन्महद्दृष्ट्वा बलं वीरप्रपूरितम् । न किञ्चिन्मनसा विस्मे लवेन बल्यालि

स्थः सिंह इवोत्तस्थौ मृगान्मत्वाऽखिलान्महान् ।

धनुर्विस्फारयन्रोषाच्छरान्मुञ्चन्सहस्रशः ॥ १० ॥

ते शरैः पीड्यमानास्तु महारोषेणपूरिताः । वीरं बालं मन्यमानाःसम्मुखं प्राद्रवंस्त
वीरान्सहस्रशो दृष्ट्वा भ्रमिभिःपर्यवस्थितान् । लवो जवेन सन्धाय शरान्रोषप्रपूरितः ।
भ्रमिराद्या सहस्रेण द्वितीयाऽयुतसङ्ख्यया । तृतीयायुतयुग्मेन तुरीयाऽयुतपञ्चभिः ।
पञ्चमी लक्षयोधानां षष्ठी योधायुताधिकैः । सप्तमी लक्षयुग्मेन सप्तभिर्भ्रमिभिर्वृतः ।

मध्ये लवो भ्रमिभ्यातः सञ्चरन्वह्निवत्तदा ।

छादयामास सर्वान्वै सैनिकान्भ्रमिकारकान् ॥ १५ ॥
केचित्खड्गैः शरैः केचित्केचित्प्रासैश्च कुन्तलैः ।
पट्टिशैः परिघैः सर्वा भ्रमिर्भग्ना महात्मना ॥ १६ ॥
सप्तभिर्भ्रमिभिर्मुक्तो रराज स कुशानुजः । मेघवृन्दविनिर्मुक्तः शशीव शरदागमे ॥
प्राहरत्सर्वथा योधान्भिन्दन्गजकरान्बहून् ।
छिन्दञ्छिरांसि वीराणां चकर्तूणि महान्ति च ॥ १८ ॥
अनेके पतिता वीरा लवबाणप्रपीडिताः । मुमुहुः समरेऽप्यन्ये नष्टा अन्ये सुकातराः
पलायनपरं सैन्यं लवबाणप्रपीडितम् । वीक्ष्य वीरो रणे योद्धुं प्रायात्पुष्कलसंज्ञकः ॥
तिष्ठतिष्ठेति च वदन्क्रोधप्रपूरितलोचनः । रथे सुहयशोभाढ्ये तिष्ठन्प्रायाल्लवं बली ॥
लवं प्रत्युवाचाथ पुष्कलः परमास्त्रवित् । तिष्ठ दत्ते मयासरूह्ये रथे सुहयशोभिते ॥
पदातिना त्वया युद्धं करोमि कथमाहवे । तस्मात्तिष्ठ रथे पश्चाद्युध्येऽहं भवता सह ॥
एतद्वाक्यं निशम्याऽसौ लवः पुष्कलमब्रवीत् ॥ २३ ॥

लव उवाच ।

त्वयादत्ते रथे स्थित्वा युद्धं कुर्यामहं रणे । तदा मे पापमेव स्यादजयः सन्निश्चय एव हि
न वयं ब्राह्मणा वीर ! प्रतिग्रहपरायणाः । वयं तु क्षत्रिया नित्यं दानकर्मक्रियारताः
इदानीं त्वद्रथं कोपाद्भनज्मि प्रत्यहं भवान् । पादचारी भवत्येव पश्चाद्युद्धं करिष्यति
पुष्कलो वाक्यमाकर्ण्य धर्मधैर्यसमन्वितम् । स्वयमपि चिरं चित्ते धनुःसज्यमथाकरोत्
तमात्तधनुषं दृष्ट्वा लवः कोपसमन्वितः । चापं चिच्छेद पाणिस्थं शरसन्धानमाचरन्
स यावत्सगुणं चापं कुरुते तावदुद्धतः । रथभङ्गं चकारास्य समरे प्रहसन्बली ॥
भग्नं रथं स्वकं वीक्ष्य धनुश्छिन्नं महात्मना । महावीरं मन्यमानः पदातिः प्राद्रवद्रणे
उभौ धनुर्धरौ वीरावुभावपि शरोद्धतौ । उभौ क्षतजविस्फुर्जौ छिन्नसन्नाहितावुभौ ॥
परस्परं बाणघातविदीर्णतनुलक्षितौ । अथाकाङ्क्षां प्रकुर्वन्तौ परस्परवधैषिणौ ॥
प्रमत्तकार्तिकेयौ वा पुरारिः पुरभिद्यथा । एवं परस्परं युद्धं प्रकुर्वाणौ रणाङ्गणे ॥
पुष्कलः प्रत्युवाचाथ लवशूरशिरोमणे । त्वादृशो न मया दृष्टः कश्चिद्वीरशिरोमणिः ॥

शिरस्ते पातयाम्यद्य बाणैः शितसुपर्वभिः । मा पलायस्व समरे प्राणांस्त्रस्व संगर
इत्युक्त्वा लवं वीरं चकार शरपञ्जरे । पुष्कलस्य शरा भूमौ नभसि व्याप्य संस्थिताः
शरपञ्जरमध्यस्थो लवः पुष्कलमब्रवीत् । महत्कर्मकृतं वीर ! पश्य मे बाणलाघवम् ॥
इत्युक्त्वा बाणसङ्घातं छित्त्वा वचनं पुनः । जगाद पुष्कलं वीरः शरसन्धानकोविदः
पातयामि मया क्षिप्तैः सायकैर्बाणपीडितः । पतिष्यसि महीपृष्ठे रुधिरेण परिप्लुतः
इत्युक्तं समाकर्ण्य पुष्कलः कोपसंयुतः । रणे संयोधयामास लवं वीरं महाबलम् ॥
लवः प्रकुपितो बाणं तीक्ष्णं वैरिविदारणम् । जग्राह स्वतःकोशाद्वर्षाग्निमिव क्रुधा
जाज्वल्यमानः शरवर्षामुक्तो लवस्य च । हृदयं भेत्तुमुद्युक्तश्छिन्नो मारुतिनाऽऽशु सः
छिन्नेमारुतिनासङ्ख्ये शरेण प्राणहारिणा । अत्यन्तं कुपितो वीरः शरमन्यं समाददे ॥
आकर्णाकृष्टचापेन समुक्तो निशितः शरः । बिभेद हृदयं तस्य पुष्कलस्य महाहवे ॥
भिन्नो वक्षसि वीरेण सायकेनाशुगामिना । पपात धरणीपृष्ठे महाशूरशिरोमणिः ॥
पतितं तं समालोक्य पुष्कलं पवनात्मजः । गृहीत्वा राघवभ्रात्रे ददौ मूर्च्छासमन्वितम्
मूर्च्छितं तं समालोक्य शोकविह्वलमानसः । हनूमन्तं लवं हन्तुं निदिदेश कृपान्वितः

हनूमान्क्रोधसम्प्लुष्टो लवं सङ्ख्ये महाबलम् ।
विजेतुं तरसा प्रागाद् वृक्षमुद्यम्य शाल्मलिम् ॥ ४८ ॥

वृक्षेण हतवान्मूर्ध्नि लवस्य हनुमान्बली । तमापतन्तं तरसा चिच्छेद शतधा लवः ॥
छिन्नेनगे पुनः कोपाद्वृक्षानुत्पाट्य मूलतः । ताडयामास हृदये मस्तके च महाब
यान्यान्वृक्षान्समादत्ते ताडनाय स मारुतिः । तांस्तांश्चिच्छेद तरसा बलवान्लवपर्वभिः

तदा शिलाः समुत्पाट्य गण्डशैलोपमाः कपिः ।
पातयामास शिरसि क्षिप्रवेगेन मारुतिः ॥ ५२ ॥
स आहतः शिलासङ्घैः सङ्ख्ये कोदण्डमुन्नयन् ।
बाणैस्ताश्चूर्णयामास यन्त्रिकाभिर्यथा कणाः ॥ ५३ ॥

तदाऽत्यन्तं प्रकुपितो मारुतिः पुच्छवेष्टनम् । चकार समरोपान्ते लवस्य बलिनां वरः

स्वं पुच्छेन समाविद्धं वीक्ष्य स्वाम्यं हृदि स्मरन् ।

मुष्टिना ताडयामास लाङ्गूलं मारुतेर्वली ॥ ५५ ॥

सन्मुष्टिघातव्यथितो मारुतिस्तममूमुचत् । समुक्तः पुच्छतो युद्धे शरान्मुञ्चन्नभूद्वली ॥
दुर्वारशरघातेन सम्पीडिततनुः कपिः । बाणवर्षं मन्यमानो दुःसहं समरे बहु ॥५७ ॥

किंकर्तव्यमितोऽस्माभिः पलाय्य यदि गम्यते ।
तदा मे स्वामिनो लज्जा ताडयेद्‌ बालकोऽत्र माम् ॥ ५८ ॥

ब्रह्मदत्तवरत्वात्तु मूर्च्छा न मरणं न हि । दुःसहा बाणपीडाऽत्र किंकर्तव्यं मयाऽधुना

शत्रुघ्नः समरे गत्वा जयं प्राप्नोतु बालकात् ।
अहं तावज्जयाकाङ्क्षी शये कपटमूर्च्छया ॥ ६० ॥

इत्येवं मानसे कृत्वा पपात रणमण्डले । पश्यतां सर्ववीराणां कपटेन विमूर्च्छितः ॥
तं मूर्च्छितं समाज्ञाय हनूमन्तं महाबलम् । जघान सर्वान्नृपतीञ्छरमोक्षविचक्षणः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
हनुमत्पतनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः

### शत्रुघ्नेन सह घोरयुद्धे लवस्य मूर्च्छावर्णनम् ।

शेष उवाच ।

मूर्च्छितं मारुतिं श्रुत्वा शत्रुघ्नः शोकमाययौ ।
किं कर्तव्यं मया सङ्ख्ये बालकोऽयं महाबलः ॥ १ ॥

स्वयं रथे हेममये तिष्ठन्वीरवरैःसह । योद्धुं प्रागाल्लवो यत्र विचित्ररणकोविदः ॥ २ ॥
लवं ददर्श शिशुतां प्राप्तं राममिव क्षितौ । धनुर्बाणकरं वीरान्क्षिपन्तं रणमूर्धनि ॥
विचारयामास तदा कोऽयं रामस्वरूपधृक् । नीलोत्पलदलश्यामं वपुर्बिभ्रन्मनोहरम् ॥
यदि देहेनानुजातुनो भवति नान्यथा । अस्मान्विजित्य समरे यास्यते मृगराडिव ॥

सोऽन्यद्धनुरुपादाय यावन्मुञ्चति सायकान् । तावच्चमञ्जसा लवः सायकैः शितपर्वभि
करस्थमच्छिनच्चापं सुदृढं गुणपूरितम् । तत्कर्म पूजयन्वीरा रणमण्डलवर्तिनः ॥

स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अन्यं रथं समास्थाय ययौ योद्धुं लवं बलात् ॥ २४ ॥

अनेकबाणनिर्भिन्नः स्रवद्रक्तकलेवरः । पुष्पितः किंशुक इव शुशुभे रणमध्यगः ॥
शत्रुघ्नबाणसंहतः परं कोपमुपागमत् । बाणसंधानचतुरः कुण्डलीकृतचापवान् ॥
विशीर्णकवचं देहं शिरो मुकुटवर्जितम् । स्रवद्रक्तपरिप्लुष्टं शत्रुघ्नस्य चकार सः ॥

तदा रामानुजः क्रुद्धो दशबाणाञ्छिताग्रकान् ।
मुमोच प्राणसंहारकारकान्कुपितो भृशम् ॥ २८ ॥

स तांस्तांस्तिलशः कृत्वा बाणैर्निशितपर्वभिः । ताडयामास हृदये शत्रुघ्नस्याष्टभि
अत्यन्तं बाणपीडार्तो लवं बलिनमुत्स्मरन् । दुःसहं मन्यमानस्तं शरान्मुञ्चन्नभ
तदा लवेन तीक्ष्णेन हृदि भिन्नो विशालके । अर्धचन्द्रसमानेन तीक्ष्णपर्वसुशोभित

स विद्धो हृदि बाणेन पीडां प्राप्तः सुदारुणाम्
पपात स्यन्दनोपस्थे धनुष्पाणिः सुशोभितः ॥ ३२ ॥

शत्रुघ्नं मूर्च्छितं दृष्ट्वा नृपाश्च सुरथादयः । दुद्रुवुर्लवमुद्युक्ता जयप्राप्त्यै रणे
सुरथो विमलो वीरो राजा वीरमणिस्तथा । सुमदो रिपुतापश्च परिवव्रुश्च संयु
केचित्तु शुक्लैर्मुसलैः केचिद्बाणैः सुदारुणैः । प्रासैः परशुभिः केचित्सर्वतस्ताडयन्नृ

तानधर्मेण युद्धोत्कान्दृष्ट्वा वीरशिरोमणिः ।
दशभिर्दशभिर्बाणैस्ताडयामास संयुगे ॥ ३६ ॥

ते बाणवर्षपिहिता रणमध्ये सुकोपनाः । केचित्पलायिताः केचिन्मुमुहुर्युद्धमण्ड

तावत्स राजा शत्रुघ्नो मूर्च्छां सन्त्यज्य सङ्गरे ।
लवं प्रायान्महावीरं योद्धुं बलसमन्वितः ॥ ३८ ॥
आगत्य तं लवं प्राह धन्योऽसि शिशुसन्निभः ।
न बालस्त्वं सुरः कश्चिच्छलितुं मां समागतः ॥ ३९ ॥

ऽपि म हि वीरेण पातितो रणमण्डले । त्वयाऽहं प्रापितो मूर्च्छां समक्षं मम

इदानीं पश्य मे वीर्यं त्वां सङ्ख्ये पातयाम्यहम् ।

सहस्व बाणमेकं त्वं मा पलायस्व बालक ! ॥ ४१ ॥

युक्त्वा समरे बालं शरमेकं समाददे । यमदण्डसमं घोरं लक्ष्मणो येन घातितः ॥४२॥

न्धायबाणं निशितं हृद्भेत्तुं मनोदधत । लवं वीरसहस्राणां वह्निवत्सर्वदाहकम् ॥

तं बाणं प्रज्वलन्तं स द्योतयन्तं दिशोदश ।

दृष्ट्वा सस्मार बलिनं कुशं वैरिनिपातिनम् ॥ ४४ ॥

यद्यस्मिन्समये वीरो भ्रातास्यादुपलभ्यान्मम । तदा शत्रुघ्नवशता न मे स्यान्नयमुल्वणम्

एवं तर्कयतस्तस्य लवस्य च महात्मनः । हृदिलग्नो महाबाणो घोरःकालानलोपमः

मूर्च्छां प्राप तदा वीरो भूपसायकसंहतः । सद्भूरे सर्ववीराणां शिरोभिःसमलङ्कृते

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे

लवमूर्च्छानाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

---

## त्रिषष्टितमोऽध्यायः

### लवस्य पतनात्सीतया शोककरणम् ।

शेष उवाच ।

लवं विमूर्च्छितं दृष्ट्वा बलिवैरिविदारणम् । शत्रुघ्नो जयमापेदे रणमूर्ध्नि महाबलः ॥

लवं बालं रथे स्थाप्य शिरस्त्राणाद्यलङ्कृतम् ।

रामप्रतिनिधिं मूर्त्या ततो गन्तुमियेष सः ॥ २ ॥

स्वमित्रं शत्रुणाग्रस्तमिति दुःखसमन्विताः। बालामात्रेऽस्य सीतायै त्वरिताःसंन्यवेदयन्

बाला ऊचुः ।

! ते पुत्रो बलाद्ग्राह्यमपाहरत् । कस्यचिद्भूपवर्यस्य वल्गुवत्स्य मानिनः

ततो युद्धमभूद्घोरं तस्य सैन्येन जानकि ! । तदा वीरेण पुत्रेण तव सर्वं निपातितम्
पश्चादपि जयंप्राप्तःसुतस्तव मनोहरः । तं भूपं मूर्च्छितं कृत्वा जयमाप रणाङ्गणे ॥ ६ ॥
ततो मूर्च्छां विहायथ राजा परमदारुणः । सङ्कुप्य पातयामास तवपुत्रं रणाङ्गणे ॥

अस्माभिर्वारितः पूर्वं मा गृहाण हयोत्तमम् ।
अस्मान्सर्वांश्च धिक्कृत्य ब्राह्मणान्वेदपारगान् ॥ ८ ॥

इतिवाक्यं शिशूनां सा समाकर्ण्य सुदारुणम् । पपात भूतलोपस्थे दुःखयुक्ता दरोदह सीतोवाच ।
कथं नृपो दयाहीनो बालेनसह युध्यति । अधर्मकृतदुर्बुद्धिर्यो मद्बालं न्यपातयत् ॥
लववीर ! भवान्कुत्र वर्ततेऽतिबलान्वितः। कथंत्वं निष्कृपस्याहो राज्ञोऽहार्षीर्हयोत्तमम्

त्वं बालस्ते दुराक्रान्ताः सर्वशास्त्रविशारदाः ।
रथस्था विरथस्त्वं वै कथं युद्धं समं भवेत् ॥ १२ ॥

तातांस्तु त्वयासार्द्धं रामत्यागा सुखं जहौ । इदानीं रहिता युष्मन्कथं जीवामि कानने
एहि मां मुञ्च यज्ञाश्वं गच्छत्येष महीपतिः। मद्दुःखं नाभिजानासि मम दुःखप्रमार्जकः
कुशो वचमयिष्यत्स रणे वीरशिरोमणिः । अमोचयिष्यदधुना भवन्तं भूपपार्श्वतः ॥
सोऽपि मद्दैवतो नास्ति समीपे किं करोम्यतः । दैवमेव ममाप्यत्र कारणं दुःखसम्भवे
एवमादि बहुभीमत्येषा वै विललाप ह । पादाङ्गुष्ठेन लिखती भूमिं नेत्रद्वयाश्रुभिः ॥
बालम्प्रति जगादासौ पृथुकाःस च भूपतिः । कथं मत्सुतमापात्य रणे कुत्र गमिष्यति

इति वाक्यं वदत्येषा जानकी पतिदेवता ।
• तावत्कुशस्तु सम्प्राप्त उज्जयिन्या महर्षिभिः ॥ १९ ॥

माघासितचतुर्दश्यां महाकालं समर्च्य च । प्राप्य भूरिवरांस्तस्मादागमन्मातृसन्निधौ

जानकीं विह्वलां दृष्ट्वा नेत्रोद्भूताश्रुविक्लवाम् ।
शोकविह्वलदीनाङ्गीं बभाषे वाचदुत्सुकः ॥ २१ ॥

तदा स्ववाहुरवदत्स्फुरन्युद्धाभिशंसनः । हृदये च रणोत्साहो बभूवातिरयस्य हि ॥
प्रत्युवाच जननीं दीनगद्गदभाषिणीम् । मातस्तव गतं दुःखं मयि पुत्र उपस्थिते ॥

मयि जीवति ते नैवाश्रूणि भुवि मेऽपतन् ।

पश्यं मोचयाम्यश्रुक्लिन्नां दीनगद्गदभाषिणीम् ॥ २४ ॥

कुशो दुःखमितःसद्यो दुःखितां धीरमानसः । मम भ्राता लवःकुत्र वर्तते वैरिमर्दनः ॥
सदा मामागतं ज्ञात्वा प्रहर्षन्सन्निधावियात् । न दृश्यते कथं वीरःकुत्रस्तु गतोऽधुना

येन वा सह बालत्वाद्गतो मां वै निरीक्षितुम् ।

किं त्वं रोदिषि मे मातर्लवः कुत्र स वर्तते ॥ २७ ॥

तन्मे कथय सर्वं यत्तव दुःखस्य कारणम् ।

तच्छ्रुत्वा पुत्रवाक्यं सा दुःखिता कुशमब्रवीत् ॥ २८ ॥

जानक्युवाच ।

लवोधृतो नृपेणात्र केनचिद्धयरक्षिणा । बबन्ध बालको मेऽत्र हयं यागक्रियोचितम् ।
तद्रक्षकान्बहूञ्जित्वा एकोऽनेकारिपून्बली । राजा तं मूर्छितं कृत्वा बबन्ध रणमूर्धनि
बालका इति मामूचुःसहगन्तार एव हि । ततोऽहं दुःखिता जाता निशम्य लवबन्धनम्

त्वं मोचय बलात्तस्मात्काले प्राप्तो नृपोत्तमात् ।

निशम्य मातुर्वचनं कुशःकोपसमन्वितः । जगाद तां दशन्नोष्ठं दन्तैर्दन्तान्विनिष्पिषन्

कुश उवाच ।

मातर्जानीहि तं मुक्तं लवं पाशस्य बन्धनात् । इदानीं हन्मि तं बाणैःससैन्यबलवाहनम्
यदि देवोऽमरो वापि यदि शर्वःसमागतः । तथापि मोचये तस्माद्बाणैर्निशितपर्वभिः
मा रोदिषि मातरिह वीराणां रणमूर्जितम् । कीर्तयेऽत्र भवत्येव पलायनमकीर्तये ।
देहि मे कवचं दिव्यं धनुर्गुणसमन्वितम् । शिरस्त्राणं च मे मातःकरवालं तथासितम्

इदानीं यामि समरे पातयामि बलं महत् ।

मोचयामि भ्रातरं स्वं रणमध्याद्विमूर्छितम् ॥ ३७ ॥

न मोचयाम्यद्य पुत्रं तव मातर्महारणात् । तदा तौ मे भवत्पादौ संस्पृष्टौ भवतां क्षितौ

शेष उवाच ।

... जानकी शुभलक्षणा । सर्वं प्रादाच्छस्त्रवृन्दं जयाशीर्भिर्नियुज्य तं

प्रयाहि पुत्र ! सङ्ग्रामं लवं मोचय मूर्च्छितम् ।
इत्याज्ञप्तः कुशः सङ्ख्ये कवची कुण्डली बली ॥ ४० ॥
मुकुटी करवाली च चर्मधारी धनुर्धरः । अक्षयाविषुधी कृत्वा स्कन्धयोःसिंहवीर्ययोः
जगाम तरसा नत्वा मातृपादौ रथाग्रणीः । वेगेन यावद्युद्धाय गच्छति क्षिप्रमाहवे ॥
तावद्ददर्श सलवं वैरिवृन्दनिपातितम् । आयान्तं तं कुशं वीरा ददृशुःसुमहाभटाः ॥
कृतान्तमिव संहर्तुं सर्वं विश्वमुपस्थितम् । लवो महाबलं दृष्ट्वा कुशं भ्रातरमागतम्
अत्यन्तं वह्निवद्युद्धे दिदीपे वायुनासमम् ।
रथादुन्मुच्य चात्मानं युद्धाय स विनिर्गतः ॥ ४५ ॥
कुशः सर्वांश्रणश्चात्ये वीरान्पूर्वदिशि क्षिपन् ।
पश्चिमायां दिशि लवः कोपात्सर्वान्समैरयत् ॥ ४६ ॥
कुशबाणव्यथाव्याप्ता लवसायकपीडिताः । सैन्ये जनामुनेसर्वं हस्तङ्गोलाम्बुधिभ्रमाः ॥
कुशेन च लवेनाथ शरघातैःप्रपीडितम् । न शर्म लेभे सकलं सैन्यं वीरप्रपूरितम् ॥
इतस्ततःप्रभग्नं तद्बलं त्रस्तं पुनःपुनः । न कुत्रचिद्रणे स्थित्वा युद्धमैच्छद्बलान्वितः
एतस्मिन्समये राजा शत्रुघ्नःपरतापनः । कुशं वीरं ययौ योद्धुं तादृशं लवसन्निभम् ॥
कुशं दृष्ट्वा बलाक्रान्तं राममूर्तिसमप्रभम् । रथे तिष्ठन्हेममये जगाद परवीरहा ॥५१॥

शत्रुघ्न उवाच ।

कोऽसि त्वं सन्निभो भ्राता लवेन सुमहाबल ! ।
किन्नामऽसि महावीर ! कस्ते तातः क ते प्रभुः ॥ ५२ ॥
कथं वने द्विजैर्जुष्टे तिष्ठसि त्वं नरर्षभ ! । सर्वं शंस यथा शुध्ये त्वयासह महाबल !॥
इतिवाक्यं समाकर्ण्य कुशःप्रोवाच भूमिपम् । मेघगम्भीरयावाचा नादयन्नृणमण्डलम्
केवलं सुषुवे सीता पतिव्रतपरायणा । वने वसावो वाल्मीकेश्चरणार्चनतत्परौ ॥५५॥
मातृसेवासमुद्युक्तौ सर्वविद्याविशारदौ । कुशोलव इतिख्यातनामानौ भूपतेऽनघ ! ॥
कस्त्वं वीरो रणश्लाघी किमर्थं हयसत्तमः ।
मुक्तोऽसि समरे त्वद्य जेतासि बलसंयुतः ॥ ५७ ॥

युध्यस्व त्वं मया सार्धं यदि वीरोऽसि भूमिप ! ।
इदानीं पातयिष्यामि भवन्तं रणमूर्धनि ॥ ५८ ॥
शत्रुघ्नस्तं सुतं मत्वा सीताया रामसम्भवम् ।
विसिस्मिये स्वयं चित्ते कोपाद्धनुरथाददत् ॥ ५९ ॥
समास्तधनुषं दृष्ट्वा कुशः कोपसमन्वितः । विस्फारयामास धनुः स्वीयं सुदृढमुत्तमम्
मुमोच बाणान्निशितान्कुशः सर्वशस्त्रवित् ।
तांश्चिच्छेद कुशः सर्वांल्लीलया महसमणे ॥ ६१ ॥
बाणाश्च शतसाहस्राः कुशस्य च नृपस्य च । भुवनं व्याप्नुवन्सर्वं तदद्भुतमभवन्मुने ॥
आग्नेयास्त्रेण नृपः सर्वान्ददाह तरसा बली । शमयामास तं कुशः पर्जन्यास्त्रेण वीर्यवान्
शमयामास तं भूपः वायव्येनातिविक्रमः । तदा वायुरभूत्तीव्रः सर्वतो रणमण्डले ॥६४॥
पर्वतास्त्रेण तं वायुं स कुशस्तु समावृणोत् ।
वज्रास्त्रेण नृपः सङ्ख्ये चिच्छेद स नगोपलान् ॥ ६५ ॥
तदा नारायणास्त्रं स मुमोच कुशाङ्गदः । नारायणं तदा भूपं नाशकत्परिबाधितुम् ॥
तदा प्रकुपितोऽत्यन्तं कुशः कोपपरायणः । उवाच भूपं शत्रुघ्नं महाबलपराक्रमम् ॥
जानामि त्वां महावीरं सङ्ग्रामे जयकारिणम् ।
यस्मान्नारायणास्त्रं मे न बबाधे भयानकम् ॥ ६८ ॥
इदानीं पातयाम्यद्य भूमौ त्वां नृपते शरैः । त्रिभिश्छिन्न करोम्येतत्प्रतिज्ञा तर्हि मे शृणु
यो मनुष्यवपुः प्राप्य दुर्लभं पुण्यकोटिभिः । तन्नाद्रियेत संमोहात्तस्य मेऽस्त्वद्य पातकम्
सावधानो भवानत्र भवतु प्रधनाङ्गणे । पातयामि क्षितौ सद्य इत्युक्त्वा स्वशरासने
शरं संरोपयामास घोरं कालानलप्रभम् । लक्षीकृत्य रिपोर्वक्षो विपुलं कठिनं महत् ॥
तं संहितं शरं दृष्ट्वा शत्रुघ्नः कोपमूर्च्छितः ।
मुमोच बाणान्निशितान्कुशत्वग्भेदकारकान् ॥ ७२ ॥
स बाणो हृदयं तस्य भेत्तुं तत्प्रचचाल वै । घोररूपो वह्निसम आशीविषवदुच्छ्वसन्
स बाणो नृपवर्येण रामं स्मृत्वाऽऽशु लक्षितः ।

चिच्छेद कुशमुक्तं स सायकं शितपर्वकम् ॥ ७५ ॥
दाऽत्यन्तं प्रकुपितःकुशो बाणस्य कृन्तनात् । अपरं सायकं चापे दधाराशितपर्वकम्
। यावत्तदुरोभेत्तुं करोति च बलोद्धुरः । तं तावदच्छिनत्तस्य शरं कालानलप्रभम् ॥
दा कुशो मातृपादौ स्मृत्वा रोषसमन्वितः । तृतीयं चापके स्वीये दधार शरमद्भुतम्
शत्रुघ्नस्तमपि क्षिप्रं छेत्तुं बाणं समाददे ।
तावच्छिन्नः शरेणासौ पपात धरणीतले ॥ ७६ ॥
हाहाकारो महानासीच्छत्रुघ्ने विनिपातिते । जयमाप कुशस्तत्र स्वयाहुबलदर्पितः ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
शत्रुघ्नमूर्च्छने कुशजयो नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

## चतुःषष्टितमोऽध्यायः

### कुशेन बद्धौ हनूमत्सुग्रीवौ सीतायै प्रदर्श्य युद्धवृत्तान्तनिवेदनम् ।

शेष उवाच ।

शत्रुघ्नं पतितं वीक्ष्य सुरथः प्रवरो नृपः । प्रययौ मणिनायुक्ते रथे सिद्धमहाद्भुते ॥१॥
पुष्कलस्तु रणे पूर्वं पातितःस विचारयन् । लवं ययौ तदायोद्धुं महावीरबलोन्नतम्
सुरथःकुशमासाद्य बाणान्मुञ्चन्ननेकधा । व्यथयामास समरे महावीरशिरोमणिः ॥
सुरथं विरथं चक्रे बाणैर्दशभिरुच्छ्रितैः । धनुश्चिच्छेद सरसा सुदृढं गुणपूरितम् ॥४॥
अस्त्रप्रत्यस्त्रसंहारैःक्षेपणैःप्रतिक्षेपणैः । अभवत्तुमुलं युद्धं वीराणां रोमहर्षणम् ॥
अन्यत्तं समरोद्युक्ते सुरथे दुर्जये नृपे । कुशः सञ्चिन्तयामास किं कर्तव्यं रणे मया ॥
विचार्य निशितं घोरं सायकंसमुपाददे । हननाय नृपस्यास्य महाबलसमन्वितः ॥७॥
.तमागतं शरं दृष्ट्वा कालानलसमप्रभम् । छेत्तुं मतिं चकाराशु तावल्लग्नो महाशरः ॥८॥
मुमूर्च्छ समरे वीरो महावीरबलस्ततः । पपात स्यन्दनोपस्थे सारथिस्तमुपाहरत् ॥

सुग्रीवे पतिते दृष्ट्वा पूर्णं जगत्तमभितम्न् । रामप्रर्ग्य वीरमार्च सिषाय पवनात्मज
तर्मीमन्नं प्रयत्नमागतं वीक्ष्य वानरम् । जहास वगौगम्बलाकोशगमिव तं ग्रा

उवाच च हनूमन्तमेहि त्वं मम संमुखम् ।
भेत्स्ये बाणसहस्रेण मुंगौ यास्यसि यामिनीम् ॥ ११ ॥
इत्युक्ते हनुमाञ्ञात्वा रामपुत्रं महाबलम् ।
स्वामिकार्ये प्रवर्तमानिति दृष्ट्वा प्रधाविनः ॥ १३ ॥

शालमुत्पाट्य तरसा विशालं शम्भ्वाननम् । पूर्णं वक्षसि संलङ्घ्यपर्यायेदुर्ममहा
शालहस्तं समायान्तं हनूमन्तं महाबलम् । चिच्छेदुस्तैर्विषाय सांऽप्यन्त्रैर्मिति

स बाणविद्धस्तरसा कुशेन चन्द्रशालिना ।
शालेन हृदि सम्प्राप्ते हत्वा निविष्य मारुतिः ॥ १५ ॥
शालाहतस्तदा बालः किञ्चिन्नाकम्पत स्मयात् ।
तदा वीराः प्रशंसां तु प्रचक्रुस्तस्य बाल्यतः ॥ १७ ॥

स शालेन हतो वीरःसंहारास्त्रं समाददे । संहर्तुं वैरिणं कोपात्कुशःस परमास्त्रं

संहारास्त्रं समालोक्य दुर्जयं कुशमोचितम् ।
दध्यौ रामं स्वमनसा भक्तविघ्नविनाशकम् ॥ १९ ॥

तदा मुक्तं कुशेनाशु तदस्त्रं हृदि मारुतेः । लग्नं महाव्यथाकारि तेन मूर्च्छामितःपुन

मूर्च्छां प्राप्तं तु तं दृष्ट्वा प्लवगं बलसंयुतः ।
विव्याध सायकैस्तीक्ष्णैः सैन्यं तत्सकलं महत् ॥ २१ ॥

तस्य बाणायुतैर्भग्नं बलं सर्वं रणाङ्गणे । पलायनपरं जातं चतुरङ्गसमन्वितम् ॥ २

तदा कपिपतिः कोपात्सुग्रीवो रक्षको महान् ।
अभ्यधावन्नगान्नेकानुत्पाट्य कुशमुद्धटम् ॥ २३ ॥

कुशःसर्वान्प्रचिच्छेदलीलया प्रहसन्नगान् । पुनरप्यागतान्वृक्षांश्चिच्छेद तरसा ब
अनेकबाणव्यथितः सुग्रीवःसमराङ्गणे । जग्राह पर्वतं घोरं कुशमस्तकमध्यतः ।

कुशस्तं नगमायान्तं वीक्ष्य बाणैरनेकधा । -

निष्पिपेष चकाराशु महारुद्राङ्गयाग्यताम् ॥ २६ ॥

यस्तन्महत्कर्म दृष्ट्वा बालेन निर्मितम् । जयाशां प्रतिनिर्वृत्तो यमूध समराङ्गणे
ध्ये दुराक्रान्तं कुशं लाङ्गूलताडकम् । अत्यमर्षो स्वाक्रान्तस्तं हन्तुं नगमाददे
ानं हन्तुमुद्युक्तं वीक्ष्य सुग्रीवमादरात् । ताडयामास बहुभिःसायकैःशितपर्वभिः
ाडितो बहुविधैःशरैःपीडासमन्वितः । कुशं हन्तुं समारब्धो ययौ शालं समाददे
ापि च कुशोवीरो वारुणास्त्रं समाददे । बबन्ध तं च पाशेन दृढेन सलवाग्रजः
ःपाशकैःसितपैःकुशेन बलशालिना । पपात रणमध्ये वै महावीरैरलङ्कृते ॥

सुग्रीवं पतितं दृष्ट्वा वीराः सर्वत्र दुद्रुवुः ।
जयमाप लवभ्राता महावीरशिरोमणिः ॥ ३३ ॥

दुयौ भटाञ्जित्वा पुष्कलं चाङ्गदं तथा । प्रतापाग्र्यं वीरमणि तथाऽन्यानपि भूभुजः
माप्य रणे वीरो लवो भ्रातरमागमत् । सङ्ग्रामे जयकर्तारं वैरिकोटिनिपातकम्
रं मद्रविशौ परिरम्भं प्रकुर्वतः । अयमानौ तदा वार्तां सुखे चक्रतुरुन्मदौ ॥ ३६ ॥

लव उवाच ।

लव प्रसादेन निस्तीर्णो रणतोयधिः । इदानीं वीर ! रणकं शोधयावः सुशोभिनम्

इत्युक्त्वा राजसविधे जगाम सलवः कुशः ।
राज्ञो मौलिमणिं चित्रं जग्राह कनकाचितम् ॥ ३८ ॥

ात्य लवोवीरो जग्राह मुकुटं शुभम् । अङ्गदे च महानर्घ्ये शत्रुघ्नस्यापरस्य च ॥

गृहीत्वा शस्त्रसङ्घातं हनूमन्तं कपीश्वरम् ।
सुग्रीवं सविधे गत्वा उभावपि बबन्धतुः ॥ ४० ॥

पुच्छे वायुसुतस्यायं गृहीत्वा तु कुशानुजः ।
भ्रातरं प्रत्युवाचेदं नेष्यामि स्वकमन्दिरम् ॥ ४१ ॥

मेर्जननीप्रीत्यै गृहीत्वा पुच्छकेत्वहम् । क्रीडार्थमृषिपुत्राणां कौतुकार्थं ममैव च

एतच्छ्रुत्वा ततो वाक्यमुवाच च कुशो लवम् ।
अहमेनं ग्रहीष्यामि वानरं बलिनं दृढम् ॥ ४३ ॥

इत्येवं भाष्यमाणौ तौ बद्ध्वा तौ बलिनां वरौ ।
पुच्छयोर्बलिनौ धृत्वा जग्मतुः स्वाश्रमम्प्रति ॥ ४४ ॥
स्वाश्रमाय प्रगच्छन्तौ वीक्ष्य तौ कपिसत्तमौ ।
कम्पमानौ जगदतुरन्योन्यं भीतया गिरा ॥ ४५ ॥
हनूमान्कपिराजानं प्रत्युवाच भयार्द्रधीः । एतौ रामसुतावस्मान्नेष्यतः स्वाश्रमम्प्रति
मयापूर्वं कृतंकर्म जानकीम्प्रति गच्छता । तत्र मे जानकीदेवी संमुखाऽभून्मनोहरा
सा मां द्रक्ष्यति वैदेही बद्धं पाशेन वैरिणा ।
तदा हसिष्यति परा त्रपा मेऽत्र भविष्यति ॥ ४८ ॥
मया किमत्र कर्तव्यं प्राणत्यागो भविष्यति ।
महद्दुःखं चापतितं स रामः किं करिष्यति ॥ ४९ ॥
सुग्रीवस्तद्वचःश्रुत्वा ममाप्येवं महाकपे ! । वेत्स्यते यदि मामेवं निधनं तु भविष्यति ।
एवं कथयतोरेव ह्यन्योन्यं भयभीतयोः । कुशोलवश्च भवनं मातुः प्रापतुरोजसा ॥
सायातौ समीक्ष्यैव जहर्ष जननी तयोः । अन्योन्यं परमप्रीत्या परिरेभे निजौ सुतौ
ताभ्यां पुच्छगृहीतौ तौ वानरौ वीक्ष्य जानकी ।
हनूमन्तं च सुग्रीवं सर्ववीरं कपीश्वरम् ॥ ५२ ॥
जहास पाशबद्धौ तौ वीक्षमाणा वराङ्गना । उवाच च विमोक्षार्थं वदन्ती वचनं वरम्
पुत्रौ ! प्रमुञ्चतं वीरौ महावीरौ महाबलौ ।
द्रक्ष्यतो मां यदि स्फीतौ प्राणत्यागं करिष्यतः ॥ ५५ ॥
अयं वै हनुमान्वीरो यो ददाह दनोः पुरीम् ।
अयमप्यृक्षराजो हि सर्ववानरभूमिपः ॥ ५६ ॥
किमर्थं विधृतौ कुत्र किया हतमनादरात् ।
पुच्छे युवाभ्यां विधृतौ स महान्विस्मयोऽस्ति मे ॥ ५७ ॥
इति मातुर्वचःश्लक्ष्णं श्रुत्वा तौ पुत्रकौ तदा । ऊचतुर्विनयश्रेष्ठौ महाबलसमन्वितौ ॥
मातःकश्चन भूपालो रामो दाशरथिर्बली । तेन मुक्तो हयःस्वर्णभालपत्रःसुशोभितः ॥

तत्रैवं लिखितं मातरेकवीरा प्रसूर्मम। ये क्षत्रियास्ते गृह्णन्तु नोचेत्पादतलार्चकाः ॥
तदा मया विचारो वै कृतः स्वान्ते पतिव्रते ! ।
भवती क्षत्रिया किं न वीरसूः किं न वा भवेत् ॥ ६१ ॥
धाष्ट्र्यं तद्वीक्ष्य भूपस्य गृहीतोऽश्वो मया बलात्।
जितं कुशेन वीरेण सैन्यं तत्पालितं रणे ॥ ६२ ॥
मुकुटोऽयं भूमिपतेर्जानीहि पतिदेवते ! । अयमप्यन्यवीरस्य पुष्कलस्य महात्मनः ॥
जानीहि मुकुटं रम्यं मणिमुक्ताविराजितम् ।
अश्वोऽयं मे मनोहारी कामगामी हि भूपतेः ॥ ६४ ॥
आरोहणाय मद्भ्रातुर्जानीहि वल्लिनोपरे । इमौ कीशौ मयानीतौ मयारम्भुमानीतौ वल्लिनांवरौ
कौतुकार्थं तवैवेतौ सङ्ग्रामे युद्धकारकौ ।
इति वाक्यं समाकर्ण्य जानकी पतिदेवता ॥ ६६ ॥
जगाद पुत्रौ तौ वीरौ वीरवामरमुक्तये ॥ ६७ ॥
सीतोवाच ।
सुताभ्यामनयाऽत्रष्टो हृतो रामहयो महान्। अनेके पातिता वीरा इमौ बद्धौ कपीश्वरौ
पितुस्तव हयो वीरौ यागार्थं मोचितोऽमुना ।
तस्यापि हृतवन्तौ किं वाजिनं मखसत्तमे ॥ ६९ ॥
मुञ्चतं तु पुत्रावेतौ मुञ्चतं वाजिनांवरम् । क्षाम्यतां भूपतेर्भ्राता शत्रुघ्नः परकोपनः ॥
जनन्यास्तद्वचः श्रुत्वा ऊचतुस्तां बलान्वितौ ।
क्षात्रधर्मेण तं भूपं जितवन्तौ बलान्वितम् ॥ ७१ ॥
नास्माकमनयो मातः क्षात्रधर्मेण युध्यताम् ।
वाल्मीकिना पुरा प्रोक्तमस्माकं पठतांपुरः ॥ ७२ ॥
दुष्यन्तेन समंयुद्धं भरतेन कृतंपुरा । कण्वस्याश्रमके वाहं धृत्वा यागक्रियोचितम् ॥
तस्मात्सुतः स्वपित्राऽपि युध्येद् भ्रात्राऽपि चानुजः ।
गुरुणा शिष्य एवापि तस्मान्नो पापसम्भवः ॥ ७४ ॥

त्वद्भ्रातोऽधुना नाथो वाल्मीको हयमुत्तमम् ।
मोक्ष्यावः कौशलेन्द्रो हि करिष्यावो यज्ञमस्य ॥ ७५ ॥
इत्युक्त्वा मातरं धीरौ गतौ रणे कपीश्वरौ ।
अमुञ्चतां हयं चापि हयमेधक्रियोचितम् ॥ ७६ ॥
सीतादेवी स्वपुत्राभ्यां श्रुत्वा सैन्यं निपातितम् ।
श्रीरामं मनसा ध्यात्वा भानुमैक्षत साक्षिणम् ॥ ७७ ॥
यद्यहं मनसावाचा कर्मणा रघुनायकम् । भजामि नान्यं मनसा तर्हि जीवेदयं नृपः ॥
सैन्यं चापि महत्सर्वं यन्नाशितमिदं बलात् ।
पुत्राभ्यां तत्तु जीवेत मत्सत्याज्जगतां पते ! ॥ ७९ ॥
इति यावद्वचो ब्रूते जानकी पतिदेवता । तावद्बलं च तत्सर्वं जीवितं रणमूर्द्धनि ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे
सैन्यजीवनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः

### अश्वेन सह शत्रुघ्नादीनामयोध्यां प्रत्यागमनम् ।

शेष उवाच ।

क्षणान्मूर्च्छां जहौ वीरः शत्रुघ्नः समराङ्गणे ।
अन्येऽपि वीरा बलिनो मूर्च्छां प्राप्ताः सुजीविताः ॥ १ ॥
शत्रुघ्नो वाजिनां श्रेष्ठं ददर्श पुरतः स्थितम् । आत्मानं चशिरस्त्राणरहितं सैन्यजीवितम्
वीक्ष्य चित्रमिदं स्वान्ते चकार च जगाद ह ।
सुमतिं मन्त्रिणां श्रेष्ठं मूर्च्छाविरहितं तदा ॥ २ ॥
कृपां कृत्वा हयं प्रादाद् बालो यज्ञस्य पूर्तये ।

गच्छाम रामं तरसा हयागमनकाङ्क्षिणम् ॥ ४ ॥

इत्युक्त्वा स रथेस्थित्वा हयमादाय वेगतः । ययौ तदाश्रमाद्दूरं भेरीशङ्खविवर्जितः।
तत्पृष्टतो महासैन्यं चतुरङ्गसमन्वितम् । चचाल कुर्वन्सम्भग्नं स्वभारेण फणीश्वरम्
अथेन जाह्नवीं तीर्त्वा कल्लोलजलशालिनीम् । जगाम विषये स्वीये स्वकीयजनशोभिते
पुष्कलेनयुतो राजा सुरथेन समन्वितः । रथे मणिमये तिष्ठन्महाकोदण्डधारकः ॥८॥
हयं तं पुरतःकृत्वा रत्नमालाविभूषितम् । श्वेतातपत्रं तस्यैव मूर्ध्नि चामरभूषितम् ।
अनेकरथसाहस्रैःपरीतो बलिभिर्नृपैः । उच्चत्कोदण्डललितैर्वीरनादविभूषितैः ॥ १० ॥
क्रमेण नगरीं प्राप सूर्यवंश विभूषिताम् । अनेकैःकेतुभिःश्रेष्ठैर्भूषितां दुर्गराजिताम् ।
रामःश्रुत्वा हयंप्राप्तं शत्रुघ्नेन सहामुना । पुष्कलेन च वीरेण ययौ हर्षमनेकधा ॥१२॥
कटकं निर्दिदेशासौ चतुरङ्गं महाबलम् । लक्ष्मणं प्रेषयामास भ्रातरं बलिनांवरम् ।

लक्ष्मणः सैन्यसहितो गत्वा भ्रातरमागतम् ।
परिरेभे मुदाक्रान्तः क्षत शोभितगात्रकम् ॥ १४ ॥

सर्वत्र कुशलं पृष्टो वार्तां चात्र चकार सः । परमं हर्षमापन्नः शत्रुघ्नः सङ्गतो मुदा ॥
सौमित्रिः स्वरथेस्थित्वाभ्रात्रासह महामनाः । सैन्येनमहतावीरो ययौ स्वनगरीं प्रति
सरयूःपुण्यसलिला पवित्रितजगत्त्रया । रामपादरजःपूता शरच्चन्द्रसमप्रभा ॥ १७ ॥
हंसकारण्डवाकीर्णा चक्रवाकोपशोभिता । विचित्रतरवर्णैश्च पक्षिभिर्नादिताभृशम् ॥
मण्डपास्तत्र बहुशो रामचन्द्रेण कारिताः । ब्राह्मणानां वेदविदां पृथक्पाठनिनादकाः

क्षत्रियास्तत्र बहवो धनुष्पाणिसुशोभिताः ।
ज्याटङ्कारेण बहुना नादयन्तो महीतलम् ॥ २० ॥

भुञ्जते ब्राह्मणा यत्र विचित्रान्नैर्मनोहरैः । परस्परं प्रपश्यन्तो वार्तां चक्रुर्मनोहराम् ॥

पयसाऽन्नानि शुभ्राणि चन्द्रकान्तिसमानि च ।
क्षीराज्यबहुयुक्तानि शर्करामिश्रितानि च ॥ २२ ॥

अपूपास्तत्र बहुलाश्चन्द्रबिम्बसमाःश्रिया । कर्पूरादि सुगन्धेन वासिताःसुमनोहराः ॥
फेनिका वटकाःस्निग्धाः शतच्छिद्रा विरन्ध्रकाः ।

शष्कुल्यो मण्डकापूपा मधुरान्नसमन्विताः ॥ २४ ॥
ं कुमुदसङ्काशं मुद्गशालि विमिश्रितम् । सुगन्धेन समायुक्तमत्यन्तं प्रीतिदायकम् ॥
पूरेणान्वितो दध्ना यथेष्टं सितमोदनः । स्वादुपायसकैःसूपःपात्रेषुन्यप्रपूपकैः ॥२६॥
तत्र केचित्तु द्विजाःपात्रे निक्षिप्तं वीक्ष्य पायसम् ।
परस्परं ते प्रपृच्छुः किमिदं दृश्यतेऽद्भुतम् ॥ २७ ॥
किं चन्द्रबिम्बं नभसःपतितं तमसोभयात् । अमृतं तु भवत्यत्र मृत्युनाशकमद्भुतम् ॥
तच्छ्रुत्वा रोगमाप्राप्तः प्रोवाचान्यो द्विजोत्तमः ।
न भवत्येव चन्द्रस्य बिम्बं स्वमृतविप्लुतम् ॥ २९ ॥
एकमिन्दोर्वपुस्त्वेतद्दृश्यते सदृशं कथम् । ब्राह्मणानां सहस्रस्य पात्रेपात्रे पृथक्पृथक्
ततो जानीहि कुमुदं कर्पूरं वा भविष्यति ।
मा जानीहि मृगाङ्कस्य बिम्बं शुभ्रश्रियान्वितम् ॥ ३१ ॥
तावदन्यो दयाक्रान्तो धुन्वन्स्वं मस्तकं तथा ।
न जानन्ति द्विजा मूढाःस्वादुज्ञानविचक्षणाः ॥ ३२ ॥
इदं तु क्षौद्रकन्दस्य रसेन परिपाचितम् । जानीहि शतपत्रस्य पुष्पाणि मधुराणि च
एवं परस्परं विप्राःकन्दमूलफलाशिनः । तर्कयन्ति मुने प्रीता रसज्ञानेऽतिलोलुपाः ।
तावदन्यो द्विज प्राह क्षत्रियाणां वरं अनुः ।
भोक्ष्यन्ते तादृशं स्वन्नं महापुण्यैरुपस्कृतम् ॥ ३५ ॥
तदा तं प्राब्रवीद्विप्रो दत्तस्य फलमीदृशम् । ये दत्त्यप्रजन्मभ्यःप्राप्नुवन्ति तदीप्सित
यैरर्चितोनैव हरिर्नैवेद्यैर्विविधैर्मुहुः । तेषामेतादृशं भोज्यं न भवेदक्षिगोचरम् ॥ ३७
यैर्नरैरग्रजन्मानो भोजिता विविधैरसैः । भुञ्जते ते स्वादुरसं पापिनां चक्षुरुज्झित
एवंविधै रसैर्मिष्टैर्भोजिता द्विजसत्तमाः । मण्डपे विपठन्तस्ते शब्दब्रह्मविचक्षणा
नृत्यन्त्येके हसन्त्येके नदन्त्येके प्रहर्षिताः ।
उत्सवो वहुरद्भाति तत्र शत्रुघ्न आगमत् ॥ ४० ॥
रामःशत्रुघ्नमायान्तं पुष्कलेन समन्वितम् । निरीक्ष्यमुदमुद्भूतां रक्षितुं नाशक्नत

यावदुत्तिष्ठते रामो भ्रातरं हयपालकम् । तावद्रामपदेऽलग्नःशत्रुघ्नो भ्रातृवत्सलः ॥ ४२ ॥
पादयोःपतितं वीक्ष्य भ्रातरं विनयान्वितम् । परिरेभे दृढं प्रीतःक्षतसंशोभिताङ्गकम् ॥
अश्रूणि बहुधा मुञ्चन्हर्षाच्छिरसि राघवः । अत्यन्तं परमां प्राप मुदंचवन दूरगाम् ॥
पुष्कलं स्वीयपदयोर्नम्रं विनयविह्वलः । सुदृढं भुजयोर्मध्ये विनीयापीडयद्‌ भृशम् ॥
हनूमन्तं तथावीरं सुग्रीवं चाङ्गदं तथा । लक्ष्मीनिधिं अमकजं प्रतापाग्र्यं रिपुञ्जयन् ॥
सुबाहुं सुमदं वीरं विमलं नीलरत्नकम् । सत्यवन्तं वीरमणिं सुरथं रामसेवकम् ॥
अन्यानपि महाभागान्रघुनाथःस्वयं तदा ।
परिरेभे दृढं स्निग्धान्पादयोः प्रणतान्नृपान् ॥ ४८ ॥
सुमतिःश्रीरघुपतिं भक्तानुग्रहकारकम् । परिरभ्य दृढं प्रीतःसंमुखेऽतिष्ठदुन्नतः ॥ ४६ ॥
तदा रामो निजामात्यं वीक्ष्य सान्निध्यमागतम् ।
उवाच परमप्रीत्या मन्त्रिणं वदतां वरः ॥ ५० ॥

श्रीराम उवाच ।

सुमते मन्त्रिणांश्रेष्ठ शंस मे वाग्मिनांवर ! । क एते भूमिपाःसर्वे कथमत्र समागताः
कुत्रकुत्र हयःप्राप्तःकेनकेन नियन्त्रितः । कथं वै मोचितो भ्रात्रा महाबल सुशालिना ॥

शेष उवाच ।

इत्युक्तो मन्त्रिणां श्रेष्ठः सुमतिः प्राह राघवम् । प्रहसन्मेघगम्भीरनादेन च सुबुद्धिमान्

सुमतिरुवाच ।

सर्वज्ञस्य पुरस्तेऽद्य मया कथमुदीर्यते ।
पृच्छसि त्वं लोकरीत्या सर्वं जानासि सर्वदृक् ॥ ५४ ॥
तथापि तवनिर्देशं शिरस्याधाय सर्वदा । ब्रवीमि तच्छृणुष्वाद्य सर्वराज शिरोमणे ॥
त्वत्प्रसादादहो स्वामिन्सर्वत्र जगतीतले । परिबभ्रामतेवाहो भालपत्रसुशोभितः
न कश्चित्तं निजग्राह स्वनाम बलदर्पितः । स्वंस्वं राज्यं समर्प्याथ प्रणेमुस्ते पदाम्बुजम्
को वा रावणदैत्येन्द्र निहन्तुर्वाजिसत्तमम् ।
गृह्णाति विजयाकाङ्क्षी जरामरणवर्जितः ॥ ५८ ॥

अहिच्छत्रां गतस्तावत्तत्र वाजी मनोरमः । तत्राजा सुमदःश्रुत्वा हयं प्राप्तं तवाग्रतो ।
सपुत्रःपत्नःसर्वसैन्येन वल्लिनावृतः । सर्वं समर्पयामास राज्यं निहतकण्टकम् ॥ ६० ॥

यो राजा जगतांनेत्रीं मातरं जगदम्बिकाम् ।
प्रसाद्य चिरमायुष्यं लेभे राज्यमकण्टकम् ॥ ६१ ॥

एष त्वां प्रणमति सुमदःप्रणुनेवितम् । मे गृहाण कृपादृष्ट्या चिरादर्शनकाङ्क्षकम्
ततःसुबाहुभूपस्य नगरे वल्लरीति । दमनस्तस्य वै पुत्रःप्रजग्राह हयोत्तमम् ॥ ६३ ॥
तेनसार्धं महद्युद्धं बभूव दमनेन च । पुष्कलो जयमापन्ने संमूर्छ्य सुभुजात्मजम् ॥ ६४ ॥
ततःसुबाहुःसङ्क्रुद्धो रणे पवनजं बलात् । मुमुजे स्व पादाब्जसेवकं बलिनांवरम् ॥

तस्य पादाहतो ज्ञानं प्राप्य शापतिरस्कृतम् ।
तुभ्यं समर्प्य सकलं वाजिनः पालकोऽभवत् ॥ ६६ ॥

एष त्वां सुभुजोराजा प्रणमत्युन्नताङ्गकः । कृपादृष्ट्याभिवीक्ष्य त्वं सुबाहुं नयकोविदम्
ततो मुक्तो हयो देवाहृदे निममज्जह । तत्र प्राप्तं मोहनास्त्रं शत्रुघ्नेन बलीयसा ॥
ततो देवपुरे प्रागाच्छ्रियावासविभूषिते । तत्रत्यं तु विजानासि यतस्त्वं तत्र वानर
विद्युन्माली हतोदैत्यःसत्यवान्सङ्गतस्ततः । सुरथेन समंयुद्धं जानासि त्वं महामते ॥
ततःकुण्डलकान्मुक्तो हयो बभ्राम सर्वतः । न कश्चित्तं निजग्राह स्ववीर्यबलदर्पितः ॥
वाल्मीकेराश्रमेरम्ये हयःप्राप्तो मनोरमः । तत्र यत्कुतुकंजातं तच्छृणुष्व नरोत्तम ॥ ७३ ॥
तवात्मजस्तव सारूप्यं बिभ्रत्षोडशवार्षिकः । जग्राह वीरस्तपत्राङ्कं वाजिनं बलवत्तमः ॥
तत्र कालजिताद्युद्धं महज्जातं नरोत्तम । निहतस्तेन वीरेण शितधारेणहेतिना ॥ ७४ ॥

अनेके निहताःसङ्ख्ये पुष्कलाद्या महाबलाः ।
मूर्च्छितं चापि शत्रुघ्नं चक्रे वीरशिरोमणिः ॥ ७५ ॥

तदा राजा महद्दुःखं विचार्य हृदि संयुगे । कोपेन मूर्च्छितं चक्रे वीरोहि बलिनांवरः ॥
स यावन्मूर्च्छितो राजा तावदन्यःसमागतः । तेनैतेन च सञ्जीव्य नाशितं कटकं तव ॥

सर्वेषां मूर्च्छितानां तु शस्त्राण्याभरणानि च ।
गृहीत्वा वानरौ बद्धौ जग्मतुःस्वाश्रमं प्रति ॥ ७८ ॥

कृपांकृत्वा पुनस्तेन दत्तोऽश्वो यज्ञियो महान् । जीवनं प्रापितंसर्वं कटकं नष्टजीवितम्
वयं गृहीत्वा तं वाहं प्राप्तास्तव समीपतः । एतदेव मया ज्ञातं तदुक्तं ते पुरोवचः ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेधे सुमतिनिवेदनं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

## षट्षष्टितमोऽध्यायः

### रामस्य वाल्मीकिनासह संवादः ।

शेष उवाच ।

कथितौ यौ सुमतिना वाल्मीकेराश्रमे शिशू ।
पुत्रौ स्वीयाविति ज्ञात्वा वाल्मीकिम्प्रति सन्नतौ ॥ १ ॥

श्रीराम उवाच ॥

कौ शिशू मम सारूप्यधारकौ वल्किनांबरौ । किमर्थं तिष्ठतस्तत्र धनुर्विद्याविशारदौ ॥
कथामात्र कथितौ श्रुत्वा विस्मयो मम जायते । यौ शत्रुघ्नं हनूमन्तंलीलयाङ्गं ववन्धतुः
तस्माच्छंस मुने सर्वं बालयोश्च विचेष्टितम् । यथा मे परमाप्रीतिर्भवत्येवमभीप्सिता
इति तत्कथितं श्रुत्वा राजराजस्य धीमतः । उवाच परमंवाक्यं स्पष्टाक्षर समन्वितम्

वाल्मीकिरुवाच ।

त्वयान्तर्यामिणो नृणां कथं ज्ञानं च नो भवेत् ।
तथापि कथयाम्यत्र तव सन्तोषहेतवे ॥ ६ ॥

राजन्यौ बालकौ महामाश्रमे वल्किनांबरौ । त्वत्सारूप्यधरौ स्वाङ्ग मनोहरवपुर्धरौ ॥
त्वया यदा वनेत्यक्ता जानकी वै निरागसी । अन्तर्वत्नी घनेघोरे विलपन्ती मुहुर्मुहुः
कुररीमिव दुःखार्तां वीक्ष्याहं तववल्लभाम् । जनकस्यसुतां पुण्यामाश्रमे स्वानयं यदा
तस्याःपर्णकुटिरम्या रचिता मुनिपुत्रकैः । तस्यामसूतपुत्रौ द्वौ भासयन्तौ दिशोदश ॥

तयोरकरवं नाम कुशोलव इतिस्फुटम् । वर्धमानावनिशं यत्र शुक्लपक्षे यथा शशी ॥११॥
कालेनोपनयादीनि सर्वाणि कृतवानहम् । वेदान्साङ्गानहं सर्वान्पाठयामास सुव्रते ॥
सर्वाणि सरहस्यानि शृणुष्व सुमते मम । आयुर्वेदं धनुर्विद्यां शस्त्रविद्यां तथैव च ॥
विद्यां जालन्धरीं चापि सङ्गीतकुशलौ कृतौ । गङ्गाकूले गायमानौ लताकुञ्जवनेषु च ॥

चञ्चलौ चलचित्तौ तौ सर्वविद्याविशारदौ ।
तदाऽष्टमविसन्तीर्णं प्राप्तः परमबाल्ययोः ॥ १५
दत्त्वा सर्वाणि शास्त्राणि मस्तके निहितःकरः ।
अतीवगानकुशलौ दृष्ट्वा लोको विसिस्मिये ॥ १६ ॥

षड्जमध्यमगान्धारस्वरभेदविशारदौ । तथाविधौ विलोक्याहं गापयामि मनोहरम् ।
भविष्यज्ञानयोगाच्च कृतं रामायणं शुभम् । मृदङ्गपणवाद्यादि यन्त्रवीणा विशारदौ
वने वने च गायन्तौ मृगपक्षि विमोहकौ । अद्भुतं गीतमाधुर्यं तव रामकुमारयोः ॥

श्रोतुं तौ वरुणो बालावानिनाय विभावरीम् ।
मनोहरवयोरूपौ गानविद्याब्धिपारगौ ॥ २० ॥

कुमारौ जगतुस्तत्र लोकेशादेशतः कलम् । परमं मधुरं रम्यं पवित्रं चरितं तव ॥२१॥
शुश्राव वरुणःसार्द्धं कुटुम्बेन च गायकैः । शृण्वन्नेवगतस्तृप्तिं मित्रेणवरुणःसह ।
क्षुधार्तोऽपि परंस्वादु चरितं रघुनन्दन । गानानन्दमहालोमहृतप्राणेन्द्रियक्रियः ॥२३॥

प्रत्यागन्तुं दिदेशासौ कुमारौ न हि तावकौ ।
रमणीय महाभोगैर्लोभितावपि बालकौ ॥ २४ ॥
चलितौ न गुरोश्चात्ममातुःपादाम्बुजस्मृतेः ।
अहं चापि गतःपश्चाद्वरुणालयमुत्तमम् ॥ २५ ॥

वरुणःप्रेमसहितः पूजांचक्रे मम प्रभो । पृच्छते जन्मकर्मादि सर्वज्ञायापि बालयोः ।
वरुणायाब्रुवं सर्वं जन्मविद्यादिपावनम् । श्रुत्वा सीतासुतौ देवः सच्चक्रेऽम्बरभूषणैः ।

देवदत्तमतोग्राह्यमिति मद्वाक्यगौरवात् ।
आहृतं राजपुत्राभ्यां यद्दत्तं वरुणेन तत् ॥ २८ ॥

प्रसन्नेन तयोर्गान गानविद्यावयोगुणैः । ततो मामब्रवीत्सीतामुद्दिश्य वरुणः कृती ॥
सीता पतिव्रता धुर्या रूपशीलवयोऽन्विता । वीरपुत्रा महाभागा त्यागंनार्हतिकर्हिचित्
महतीहानिरेतस्यास्त्यागे हि रघुनन्दन ।
सिद्धीनां परमासिद्धिरेषा तेह्यनपायिनी ॥ ३१ ॥
पामरैर्महिमा नास्या ज्ञायते यदि दूषितैः । काहानिस्तावता राम ! पुण्यश्रवणकीर्तन !
अस्मत्साक्षिकमेतस्याः पावनं चरितं सदा ।
सचरते सिद्धिमायान्ति ये सीतापदचिन्तकाः ॥ ३३ ॥
यस्याःसङ्कल्पमात्रेण जन्मस्थितिलयादिकाः ।
भवन्ति जगतां नित्यं व्यापारा येश्वरा अमी ॥ ३४ ॥
सीता मृत्युःसुधात्वेयं तपस्येषा च वर्तते ।
स्वर्गो मोक्षस्तपो योगो दानं च तव जानकी ॥ ३५ ॥
ब्रह्माणं शिवमर्त्याश्च लोकपालास्मदादिकान् ।
करोत्येषाकरोत्येव मान्या सीता तव प्रिया ॥ ३६ ॥
त्वं पिता सर्वलोकानां सीता च जननीत्यतः ।
कुदृष्टिरत्र तु क्षेमयोग्या न तव कर्हिचित् ॥ ३७ ॥
वेत्ति सीतां सदाशुद्धां सर्वज्ञो भगवान्स्वयम् ।
भवानपि सुतांभूमेः प्राणादपि गरीयसीम् ॥ ३८ ॥
आदर्तव्या त्वया तस्मात्प्रिया शुद्धेति जानकी ।
■ च शापपराभूतिः सीतायां त्वयि वा विभो ॥ ३९ ॥
इमानि ममवाक्यानि धार्य्याणि जगतांपतिम् ।
रामम्प्रति त्वया साक्षाद्वाल्मीके ! मुनिसत्तम ! ॥ ४० ॥
इत्युक्तो वरुणेनाहं सीतासङ्ग्रहकारणात् । एवमेवहि सर्वैश्च लोकपालैरपि प्रभो ! ॥
श्रुतं रामायणोद्गानं पुत्राभ्यां ते सुरासुरैः । गन्धर्वैरपि सर्वैश्च कौतुकाविष्टमानसैः ॥
प्रसन्ना वच सर्वेऽपि प्रशशंसुःसुतौ च ते । त्रैलोक्यं मोहितं ताभ्यां रूपगानवयोगुणैः

दृष्टं यल्लोकपालैस्तु सुताभ्यां स्वीकृतं हि तत् ।
अपिविश्व परा भाव्यामन्येभ्यः कीर्तिरिव च ॥ ४४ ॥

एकराशं जगत्सर्वं पूर्वे मुनिविलोकितम् । चिरामपधुनाजातं सुताभ्यांनेऽपि
एककामपरामूर्तिलिङ्कि पूर्वमवेक्षिता । कामैश्चतुर्भिरधार्य जायते च यतस्ततः
सर्वमागच्छ राजेन्द्र ! रामपुत्रौ कुशीलवौ । गीयेते अत्र सद्गीतः किं हृतो पितु
हनेषु तवसर्वेषुश्रूयते महतीस्तुतिः । त्यागादन्यत्र सीतयाः पुण्यश्लोकशिरोमणे

त्वया त्रैलोक्यनाथेन गार्हस्थ्यमनुकुर्वता ।
भङ्गीकार्यौ सुतौ राम विद्याशीलगुणान्वितौ ॥ ४९ ॥
न तौ त्वन्मातरं हित्वा स्थास्यतो भवदन्तिके ।
अनन्या सहितौ तस्मादाकार्यौ भवता सुतौ ॥ ५० ॥

दृष्ट एव मयेदानीं सेनासञ्जीवनात्पुमः । प्रत्ययःसर्वलोकानां पावनःपन्नतामपि
माहात्तं तेन चास्माकं नामरामाज्ञमानद ।शुद्धी तस्यास्तु लोकानां यन्मई तदिव

शेष उवाच ।

इति वाल्मीकिना रामः सर्वज्ञोऽप्यवबोधितः ।
स्तुत्वा नत्वा च वाल्मीकिं प्रत्युवाच सलक्ष्मणम् ॥ ५३ ॥

गच्छताताधुना सीतामानेतुं धर्मचारिणीम् । सपुत्रां रथमारोप्य सुमन्त्रसहितः

श्रावयित्वा ममैमानि मुनेश्च वचनान्यपि ।
सम्बोध्य च पुरीमेतां सीतां प्रत्यानयाशु ताम् ॥ ५५ ॥

लक्ष्मण उवाच ।

यास्यामि तव सन्देशात्सर्वेषां नः प्रमोविभो ।
देव्यायास्यति चेद्देव यात्रा मे सफला ततः ॥ ५६ ॥
मयि सा साध्यसूयैव पूर्वदोषवशात्सती ।
अनागतायां तस्यां तु क्षमस्वागन्तुकं हि माम् ॥ ५७ ॥

सुमित्रमुनिशिष्याभ्यां युतोऽगाद्भूमिजाश्रमम् ॥ ५८ ॥

थं प्रसादनीयास्यात्सीताभगवती मया । पूर्वदोषं विजानन्ती रामाधीनस्य मे सदा
वं सञ्चिन्तयन्नन्तर्हृदयसङ्कोच मध्यगः । लक्ष्मणःप्राप सीताया आश्रमं श्रमनाशनम् ॥
रात्सोऽथावरुह्याराद्श्रुरुद्धविलोचनः । आर्ये पूज्ये भगवति शुभे इति वदन्मुहुः ॥
पात पादयोस्तस्या वेपमानाखिलाङ्गकः उत्थापितस्तया देव्या प्रीतिविह्वलया स च

सीतोवाच ।

किमर्थमागतःसौम्य! वनं मुनिजनप्रियम् । आस्ते स कुशलीदेवःकौशल्या शुक्तिमौक्तिकः
भरोपो मयि कश्चिदस्य कीर्त्यां केवलायादृतः । कीर्त्यते सर्वलोकेश्च कल्याण गुणसागरः

अकीर्तिभीतिमापन्नस्त्यक्तु मां त्वां नियुक्तवान् ।
यदि ततश्च लोकेषु कीर्तिस्तस्यामलाऽभवत् ॥ ६५ ॥
मृत्याऽपि पतिसत्कीर्तिं कुर्वन्त्या मे हि सुस्थिरा ।
पतिसामीप्यमेवाशु भूयादेव हि देवर ! ॥ ६६ ॥

त्यक्तयाऽपि मया तेन नासौत्यक्तो मनागपि । फलं हि साधनायत्तं हेतुःफलवशो न तु

कौशल्याशल्यशून्याऽसौ कृपापूर्णा सदा मयि ।
आस्ते कुशलिनी यस्याः पुत्रस्त्रैलोक्यपालकः ॥ ६८ ॥

सर्वे कुशलिनःसन्ति भरताद्याश्च बान्धवाः। सुमित्रा च महाभागा यस्याःप्राणादहंप्रिया

मद्वार्त्तिकं त्वमपि त्यक्तः सर्वलोकेषु कीर्तये ।
राज्ञः किं दुस्त्यजं तस्य स्वात्माऽपि यस्य न प्रियः ॥ ७० ॥

इत्येवं बहुधा पृष्टस्तथा रामानुजः स ताम् । उवाच कुशलीदेवः कुशलं त्वयि पृच्छति

कौशल्या च सुमित्रा च याश्चान्या राजयोषितः ।
पप्रच्छुः कुशलं देवि प्रीत्या त्वामाशिषा सह ॥ ७२ ॥

कुशलप्रश्नपूर्वं हि तवपादाभिवन्दनम् । निवेदयामि शत्रुघ्नभरताभ्यां कृतं शुभे ! ॥७३॥
गुरुभिर्गुरुपत्नीभिःसर्वाभिरपि ते शुभे । दत्ताशी-कुशलप्रश्नः कृताश्च त्वयिजानकि

आकारयति देवस्त्वां निर्व्यलीकेन चात्मना ।

अन्यस्यान्यरतिस्त्वत्तोऽप्यत्र सर्वत्र भामिनि ॥ ७५ ॥
शून्या एव दिशः सर्वास्त्वां विना जनकात्मजे ।
पश्यन्नोदिति नायो नो रोदयन्नितरानपि ॥ ७६ ॥

यत्र देवि स्थितासि त्वं नित्यं स्मरति राघवः । अमून्यं तु तमेवासौ मन्यमानोविदेहजे
धन्योऽयमाश्रमोजातो वाल्मीकेरत्र जानकी । कालं क्षपयति वार्ताभिर्मदीयाभिरदर्शिते
उत्कण्ठितमनाः शोकसंविग्नोऽस्त्यामीमस्त्वयितच्छृणु । व्यर्थतामयति यत्नुपेदु धूनतं तत्संतापम्
लोकावदन्ति मामेव सर्वेषामीश्वरेश्वरम् । मद्दं त्वद्दृष्टमेवैषा स्वतन्त्रं कारणं शुभे ।
अदृष्टमेव कार्येषु सर्वशोऽप्यनुगच्छति । ईशानीयाःकुतो नैतदन्यीयुः सुखदुःखयोः ।
धनुर्भङ्गेमतिर्द्वन्द्वे कैकेय्यां मरणेपितुः । अरण्यगमने तत्र हरणे तव वारिधेः ॥ ८२ ॥
तरणे रक्षसांभर्तुर्मारणेऽपि रणेरणे । सहायीमयने महामृक्षवानररक्षसाम् ॥ ८३ ॥
लाभे तव प्रतिज्ञायाः सत्यत्वे च सतीमणे !।
पुनः स्वबन्धुसम्बन्धे राज्यप्राप्तौ च भामिनि ! ॥ ८४ ॥
पुनः प्रियावियोगे च कारणं यद्दुदारणम् । प्रसीदति तदेवाद्य संयोगे पुनरावयोः॥८५
वेदोऽन्यथा कृतो येन लोकोत्पत्तिलयौ यतः । लोलानुगवस्तस्मात्कारणं प्रथमं त्वदृ
अदृष्टमनुवर्तन्ते लोकाःसम्प्रति बोधकाः । भोगेन क्षीयतेऽदृष्टं तत्तद्भुक्तं त्वयानघे ।
स्नेहोऽकारणकः सीते वर्धमानो मम त्वयि ।
लोकाद्दृष्टे तिरस्कृत्य त्वामाहूयत आदरात् ॥ ८८ ॥
शङ्कितेनापि दोषेण स्नेहनैर्मल्यमञ्जनम् । भवतीति स वै शुद्धं आख्याधो विबुधैः सदा
स्नेहशुद्धिरियं भद्रे ! कृता मे त्वयि नान्यथा ।
मन्तव्यं रक्षितोऽप्येषः लोकः शिष्टानुवर्तिना ॥ ९० ॥
आवयोर्नन्दया देवि ! सर्वावस्थासु शुद्धये । लोको नश्येद्धि संमूढश्चरितैर्महतामयम्
आवयोरुज्ज्वलाकीर्तिरावयोरुज्ज्वलोरसः ।
आवयोरुज्ज्वलौ वंशावावयोरुज्ज्वलाः क्रियाः ॥ ९२ ॥
भवेयुराघयोःकीर्तिर्गायका उज्ज्वलाभुवि । आवयोर्भक्तिमन्तो येतेयान्त्यन्तेभवाम्बु

इत्युक्ता भवती तेन प्रीयमाणेन ते गुणैः । पत्युःपादाम्बुजे द्रष्टुं करोतु सदयं मनः ॥

वासांसि रमणीयानि भूषणानि महान्ति च ।
अङ्गरागस्तथा गन्धा मनोज्ञास्त्वयि योजिताः ॥ ९५ ॥

रथोत्रास्यश्च रामेण प्रेषिता उत्सवायते । छत्रं च चामरे शुभ्रे गजा अश्वाश्च शोभने ॥
स्तूयमानाद्विजश्रेष्ठैःसूतमागधवन्दिभिः । वन्द्यमानापुरस्त्रीभिःसेव्यमाना च योद्धृभिः

पुष्पैः संछाद्यमाना च देवी देवाङ्गनादिभिः ।
धनानि ददती तेभ्यो द्विजातिभ्यो यथेप्सितम् ॥ ९८ ॥

गजारूढौ कुमारौ च पुरस्कृत्यजनेश्वरी । मयानुगम्यमाना च गच्छायोध्यांनिजांपुरीम्
त्वयि तत्र गतायां तु सङ्गतायां प्रियेणते । सर्वासां राजनारीणामागतानां च सर्वशः
सर्वासामृषिपत्नीनां कौसल्यानां तथैव च । मङ्गलैर्वाद्यगीताद्यैर्भवत्ययमहोत्सवः ॥

शेष उवाच ।

इति विज्ञापनां देवी श्रुत्वा सीता समाह सा ।
नाहं कीर्तिकरी राज्ञो ह्युपकीर्तिः स्वयंत्वहम् ॥ १०२ ॥

किं मया तस्य साध्यं स्याद्धर्मकामार्थशून्यया । सत्येवंभवतां भूपेकोविश्वासोनिरङ्कुशो

प्रत्यक्षा वा परोक्षा वा भर्तुर्वोया मनःस्थिताः ।
न वाच्या जातु मादृश्या कल्याणकुलजातया ॥ १०४ ॥

पाणिग्रहणकाले मे यद्रूपो हृदयेस्थितः । तद्रूपोहृदयान्नासौ कदाचिदपसर्पति ॥१०५॥
लक्ष्मणेमौ कुमारौ मे तत्तेजोंशसमुद्भवौ । वंशाङ्कुरौ महाशूरौ धनुर्विद्याविशारदौ ॥
नीत्वा पितुःसमीपं ॥ लालनीयौ प्रयत्नतः। तपसाराधयिष्यामि रामंकाममिहस्थिता
वाच्यं त्वया महाभाग पूज्यपादाभिवन्दनम् । सर्वेभ्यः कुशलं चापिगत्वेतौ मदपेक्षया
पुत्रौ समादिशत्सीता गच्छतंपितुरन्तिकम् । शुश्रूषणीय एवासौ भवद्भ्यांस्वपद्मदः
आज्ञामाघव्यनिच्छन्तौ तौ कुमारौ कुशीलवौ । वाल्मीकिवचनात्तत्रजग्मतुर्वत्सलक्ष्मणौ
वाल्मीकेरेव पादाब्जसमीपं तत्सुतौ गतौ । लक्ष्मणोऽपि ववन्देतं गत्वाबालकसंयुतः
वाल्मीकिर्लक्ष्मणस्तौ तु कुमारौ मिलिता अमी ।

सभायां संस्थितं रामं ज्ञात्वा ते जग्मुरुत्सुकाः ॥ ११२ ॥
लक्ष्मणः प्रणिपत्याथ सीतावाक्यादि सर्वशः ।
कथयामास रामाय हर्षशोकयुतः सुधीः ॥ ११३ ॥
सीतासन्देशवाक्येभ्यो रामो मूर्च्छां समन्वभूत् ।
संज्ञामवाप्य चोवाच लक्ष्मणं नयकोविदम् ॥ ११४ ॥

गच्छ मित्र पुनस्तत्र यत्नेन महता च ताम् । शीघ्रमानय भद्रं ते मद्वाक्यानि निवे

अरण्ये किन्तपस्यन्त्या गतिरन्या विचिन्तिता ।
श्रुता दृष्टाऽथ वा मत्तो यन्नागच्छसि जानकि ॥ ११६ ॥
त्वदिच्छया त्वमेवैता गतारण्यं मुनिप्रियम् ।
पूजिता मुनिपत्न्यस्ता दृष्टा मुनिगणास्त्वया ॥ ११७ ॥
पूर्णो मनोरथस्तेऽद्य किं नागच्छसि भामिनि ! ।
न दोषं मयि पश्येस्त्वं स्वात्मेच्छायाविलोकनात् ॥ ११८ ॥
गत्वा गत्वाऽथ वामोरु ! पतिरेव गतिः स्त्रियाः ।
निर्गुणोऽपि गुणाम्भोधिः किं पुनर्मनसेप्सितः ॥ ११९ ॥
या या क्रियाकुलस्त्रीणां सा सा पत्युः प्रतुष्टये ।
पूर्वमेव प्रतुष्टोऽहमिदानीं सुतरां त्वयि ॥ १२० ॥

यागो जपस्तपो दानं व्रतं तीर्थं दयादिकम् । देवाश्च मयि सन्तुष्टे तुष्टमेतदसंशय

शेष उवाच ।

इति सन्देशमादाय सीतां प्रति अगस्त्यनेः । आह लक्ष्मण आत्मेशमानमः प्रणयाद्दर्

सीतानयनमुद्दिश्य प्रसन्नस्त्वं यदूचिवान् ।
करिष्यामि तद्वाक्यं विनयेन समन्वितम् ॥ १२३ ॥
इत्युक्त्वा पादयोर्नत्वा रघुनाथस्य लक्ष्मणः ।
जगाम स्यन्दने सीतां रथे निधाय महाशये ॥ १२४ ॥
वाल्मीकिः धर्मवरो वीक्ष्य रामरूपी महीश्वरी ।

उवाच स्मितमाधाय मुखं कृत्वा मनोहरम् ॥ १२५ ॥

युवां प्रगायतं पुत्रौ रामचारित्रमद्भुतम् । वीणां प्रवादयन्तौ च कलगानेन शोभितम्

इत्युक्तौ तौ सुतौ रामचारित्रं बहुपुण्यदम् । अगायतां महाभागौ सुवाक्यपदचित्रितम्

यस्मिन्धर्मविधिः साक्षात्पातिव्रत्यं तु यत्स्थितम् ।

भ्रातृस्नेहो महान्यत्र गुरुभक्तिस्तथैव च ॥ १२८ ॥

स्वामिसेवकयोर्यत्र नीतिर्मूर्तिमती किल । अधर्मकत्र्यास्तिर्यं यत्र साक्षाद्रघूद्वहात् ॥

तद्गानेन जगद्व्याप्तं दिवि देवा अपि स्थिताः ।

किन्नरा अपि यद्गानं श्रुत्वा मूर्च्छामिताः क्षणात् ॥ १३० ॥

वीणाया रणितं श्रुत्वा तालमानेन शोभितम् ।

निखिला परिषत्तत्र शालभञ्जीव विस्मिता ॥ १३१ ॥

हर्षादश्रूणि मुञ्चन्तो रामाद्या भूमिपास्तथा । तद्गानपञ्चमालापमोहिताश्चित्रितोपमाः ।

तत्र रामः सुतौ दृष्ट्वा महागानविमोहकौ ।

अदात्ताभ्यां सुवर्णस्य लक्षं लक्षं पृथक्पृथक् ॥ १३२ ॥

तदा दानपरं दृष्ट्वा वाल्मीकिमुनिसत्तमम् । अब्रूतां प्रहसन्तौ तौ किञ्चिद्वक्रभ्रुवौ सत

मुने महानयोऽनेन क्रियते भूमिपेन वै । यदावाभ्यां सुवर्णानि दातुमिच्छति लोभयन्

प्रतिग्रहो ब्राह्मणानां शस्यते नेतरेषु वै । प्रतिग्रहपरो राजा नरकायैव कल्पते ॥१३६॥

आवयोः कृपया मुक्तं राज्यं भुङ्क्ते महीपतिः ।

कथं दातुं सुवर्णानि वाञ्छति श्रेयसाञ्चितः ॥ १३७ ॥

इत्युक्तवन्तौ तौ दृष्ट्वा वाल्मीकिः कृपयायुतः ।

असंशयमुपस्थितं जानीयां नीतिविस्तरौ ॥ १३८ ॥

इति श्रुत्वा मुनेर्वाक्यं बालकौ नृपपादयोः । लग्नौ विनयसंयुक्तौ मातृभक्त्याऽतिनिर्मलौ

रामो बालौ दृढं स्वाङ्गे परिरभ्य मुदान्वितः ।

मेने स्वीयौ तदा धर्मौ मूर्तिमन्तावुपस्थितौ ॥ १४० ॥

सभाऽविरामतुल्ययोर्योरस्य यज्ञे मनोरमे । जानकीपतिभक्तित्वं सत्यं मेने मुनीश्वर!

तिरोऽग्रगुणप्रोक्तं मत्वा वात्स्यायनोऽब्रवीत् । रामायणं श्रोतुमनाः सर्वधर्मसमन्वितम्

वात्स्यायन उवाच ।

कस्मिन्कालेऽभूच्च स्वामिन्रामायणमिदं महत् ।
कस्माच्चकार किं तत्र वर्णनं तद्वदस्व मे ॥ १४६ ॥

शेष उवाच ।

एकदागतवान्विप्रो वाल्मीकिर्विपिनं महत् ।
यत्र तालास्तमालाश्च किंशुका यत्र पुष्पिताः ॥ १४७ ॥

की यत्र रजसा कुर्वंतो सौरभं वनम् । शशिप्रभेव महती दृश्यते शुभ्रकर्णभृत् ॥ १४८ ॥
रक्तो बकुलश्चापि कोविदारः कुरण्टकः । अनेके पुष्पिता यत्र पादपाः शोभने वने ।

कोकिलानां विरावेण षट्पदानां च शिञ्जितैः ।
सङ्घुष्टं सर्वतो रम्यं मनोहरवयोन्वितम् ॥ १४९ ॥

क्रौञ्चयुगं रम्यं कामबाणप्रपीडितम् । परस्परं प्रहृषितं रेमे स्निग्धतया स्थितम्
व्याधः समागत्य तयोरेकं मनोहरम् । अवधीन्निर्दयः कश्चिन्मांसास्वादनलोलुपः

तदा क्रौञ्चीव्याधहतं स्वपतिं वीक्ष्य दुःखिता ।
विललाप भृशं दुःखान्मुञ्चन्ती बाष्पमुच्चकैः ॥ १५० ॥

मुनिः प्रकुपितो निषादं क्रौञ्चघातकम् । शशाप वार्युपस्पृश्य सरितः पावनं शुभम्

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चपक्षिणोरेकमवधीः काममोहितम् ॥ १५२ ॥
तदा प्रबन्धं श्लोकस्य आत्तं मत्वा ह्यनुद्विजाः ।
ऊचुर्मुनिं प्रहृष्टास्ते शंसन्तः साधुसाध्विति ॥ १५३ ॥
स्वामिञ्छापोदिते वाक्ये भारती श्लोकमातनोत् ।
अत्यन्तं मोहनो जातः श्लोकोऽयं मुनिसत्तम ॥ १५४ ॥

मुनिः प्रहृष्टात्मा बभूव वाडवर्षभ ! । तस्मिन्काले समागत्य ब्रह्मा पुत्रैः समन्वितः

वचो जगाद वाल्मीकिं धन्योऽसि त्वं मुनीश्वर ! ।

भारती त्वन्मुखे स्थित्वा श्लोकत्वं समपद्यत ॥ १५६ ॥
तस्माद्रामायणं रम्यं कुरुष्व मधुराक्षरम् । येन ते विमला कीर्तिराकल्पान्तं भविष्यति
धन्या सैव मुखे वाणी रामनाम्ना समन्विता ।
अन्या कामकथा नृणां जनयत्येव पातकम् ॥ १५८ ॥
तस्मात्कुरुष्व रामस्य चरितं लोकविश्रुतम् । येन स्यात्पापिनां पापहानिरेव पदेपदे ॥
इत्युक्त्वान्तर्दधे ब्रह्मा सर्वदेवैः समन्वितः । ततः सञ्चिन्तयामास कथं रामायणं भवेत्
तदा ध्यानपरो जातो नदीतीरे मनोरमे । तस्य चेतस्ययो रामः प्रादुर्भूतो मनोहरः ॥
नीलोत्पलदलश्यामं रामं राजीवलोचनम् ।
निरीक्ष्य तस्य चरितं भूतं भावि भवच्च यत् ॥ १६२ ॥
तदाऽत्यन्तं मुदं प्राप्तो रामायणमथासृजत् । मनोरमपदैर्युक्तं वृत्तैर्बहुविधैरपि ॥१६३॥
षट्काण्डानि सुरम्याणि यत्र रामायणेऽनघ ! ।
बालमारण्यकं चान्यत्किष्किन्धासुन्दरं तथा ॥ १६४ ॥
युद्धमुत्तरमन्यच्च पठेतानि महामते । शृणुयाद्यो नरः पुण्यात्सर्वपापैः प्रमुच्यते ॥
तत्र बालेतु सन्तुष्टः पुत्रेष्ट्या चतुरस्सुतान् ।
प्राप पङ्क्तिरथः साक्षाद्धरिं ब्रह्म सनातनम् ॥ १६६ ॥
स कौशिकमखं गत्वा सीतामुद्वाह्य भार्गवम् । आगत्य पुरमुत्कृष्टो यौवराज्यप्रगल्भकः
मातृवाक्याद्वनं प्रागाद्गङ्गामुत्तीर्य पर्वतम् । चित्रकूटं मैथिल्या लक्ष्मणेन समन्वितः ॥
भरतस्तं वने श्रुत्वा जगाम भ्रातरं नयी । तमप्राप्य स्वयं नन्दिग्रामे वासमचीकरत् ॥
बालमेतच्छृणुष्वान्यदारण्यकसमुद्भवम् । मुनीनामाश्रमे वासस्तत्र तत्रोपवर्णनम् ॥१७०॥
नासाच्छेदः शूर्पणख्याः खरदूषणनाशनम् । मायामारीचहननं दैत्याद्रामापहारणम् ॥
वने विरहिणा भ्रान्तं मनुष्यचरितं भृतम् । कबन्धप्रेक्षणं तत्र पम्पायां गमनं तथा ॥
हनूमता सङ्गमनमित्येतद्वनमङ्कितम् । अपरं च शृणु मुने ! संक्षिप्य कथयाम्यहम् ॥१७२
सप्ततालप्रभेदश्च बालेर्मारणमद्भुतम् । सुग्रीवे राज्यदानं च वनवर्णनमित्युत ॥ १७४ ॥
लक्ष्मणात्कर्मसन्देशः सुग्रीवस्य विवासनम् ।

तस्या मुखोदितं वाक्यं श्रुत्वा सौमित्रिरब्रवीत् ।
मातः ! पतिव्रते ! रामस्त्वामाकारयते मुहुः ॥ ४ ॥
पतिव्रता पतिकृतं दोषं नानयते हृदि । तस्मादागच्छ हि मया स्थित्वा स्यन्दन उत्तमे
इत्यादिवचनं श्रुत्वा जानकी पतिदेवता ।
मनो रोषं परित्यज्य तस्थौ सौमित्रिणा रथे ॥ ६ ॥
तापसीः सकला नत्वा मुनींश्च निगमोज्ज्वलान् ।
रामं स्मरन्ती मनसा रथे स्थित्वाऽगमत्पुरीम् ॥ ७ ॥
क्रमेण नगरीं प्राप्ता महाहाभरणान्विता । सरयूं सरितं प्राप यत्र रामः स्वयं स्थितः
रथादुत्तीर्य ललिता लक्ष्मणेन समन्विता । रामस्य पादयोर्लग्ना पतिव्रतपरायणा ॥
रामस्तामागतां दृष्ट्वा जानकीं प्रेमविह्वलाम् ।
साध्वि ! त्वया सहेदानीं कुर्वे यज्ञसमापनम् ॥ १० ॥
वाल्मीकिं सा नमस्कृत्य तथान्यान्विप्रसत्तमान् ।
जगाम मातृपद्योः सम्मतिं कर्तुमुत्सुका ॥ ११ ॥
कौसल्या तामथायान्तीं वीरसूं जानकीं प्रियाम् ।
आशीर्भिरभिसंयुज्य ययौ हर्षमनेकधा ॥ १२ ॥
कैकेयीपदयोर्नम्रां वीक्ष्य वैदेहपुत्रिकाम् । भर्त्रा सह चिरं जीव सपुत्रेत्याशिषं व्यधात्
सुमित्रा स्वपदेनम्रांवीक्ष्य वैदेहपुत्रिकाम् । आशिषं व्यदधात्तस्याः पुत्रपौत्रप्रदायिनीम्
सीता ताः सर्वतो नत्वा रामचन्द्रप्रिया सती । परमं हर्षमापन्ना बभूव किल वाडव!
समागतां वीक्ष्य पत्नीं रामचन्द्रस्य कुम्भजः ।
सुवर्णपत्नीं धिक्कृत्य तामधाद्धर्मचारिणीम् ॥ १६ ॥
रामस्तदा यज्ञमध्ये शुशुभे सीतयासह । तारयानुगतो यद्वच्छशीव शरदुत्तमः ॥ १७ ॥
प्रयोगमकरोत्तत्र काले प्राप्ते मनोरमे । वैदेहा धर्मचारिण्या सर्वपापापनोदनम् ॥१८॥
सीतया सहितं रामं प्रसक्तं यज्ञकर्मणि । निरीक्ष्य जहृषुस्तत्र कौतुकेन समन्विताः ॥
वसिष्ठं प्राह सुमतिं रामस्तत्र क्रतौ वरे । किं कर्तव्यं मया स्वामिन्नतः परमवश्यकम्

रामस्येवं वचनं श्रुत्वा गुरुः प्राह महामतिः । ब्राह्मणानां प्रकर्तव्या पूजा सन्तोषकारिका
मरुत्तेन क्रतुः सृष्टः पूर्वं सम्भारसम्भृतः । ब्राह्मणास्तत्र वित्ताद्यैस्तोषिता अभवंस्तदा
अत्यन्तं वित्तसम्भारं नेतुं समशकन्नहि । प्राक्षिपन्हिमवद्देशे वित्तभारासहाद्विजाः ।

तस्मात्त्वमपि राजाग्र्य लक्ष्मीवान्नृपसत्तम ! ।
देहि दानानि विप्रेभ्यो यथा स्यात्प्रीतिरुत्तमा ॥ २४ ॥

एतच्छ्रुत्वा स राजाग्र्यः पूज्यं मत्वा घटोद्भवम् । प्रथमं पूजयामास ब्रह्मपुत्रं तपोधनम्
अनेकरत्नसम्भारैः स्वर्णभारैरनेकधा । देशैर्जनैः पवित्रैरत्यन्तप्रीतिदायकैः ॥ २५ ॥
अगस्त्यं पूजयामास सपत्नीकं मनोरमम् । तथैव रत्नैः स्वर्णैश्च देशैश्च विविधैरपि ॥
व्यासं सत्यवतीपुत्रं तथैव समपूजयत् । च्यवनं भार्यया साकं सुरत्नैः समपूजयत् ।
अन्यानपि मुनीन्सर्वानृत्विजस्तपसां निधीन् । पूजयामास रत्नौघैः स्वर्णभारैरनेकधा
अश्वमेधक्रतौ रामो विप्रेभ्यो भूरिदक्षिणाम् । लक्षं लक्षं सुवर्णस्य प्रत्येकं स्वप्रजानते
दीनान्धकृपणेभ्यश्च ददौ दानमनेकधा । यथा सन्तोषविहितैर्वित्तै रत्नैर्मनोहरैः ॥ ३१ ॥

वासांसि च विचित्राणि भोजनानि मृदूनि च ।
तत्र प्रादाद्यथा शास्त्रं सर्वेषां प्रीतिदायकम् ॥ ३२ ॥

हृष्टपुष्टजनाकीर्णं सर्वसन्तोषबृंहितम् । अत्यन्तमभवद्धृष्टं पुरं पुंस्त्रीसमावृतम् ॥ ३३ ॥
दानं ददन्तं सर्वेषां वीक्ष्य कुम्भोद्भवो मुनिः । अत्यन्तपरमप्रीतिं ययौ क्रतुवरे द्विज
सदाभिषेकतोयार्थं पानीयममृतोपमम् । आनेतुं च चतुःषष्टिनृपान्सस्त्रीन्समाह्वयत्
रामस्तु सीतया सार्द्धमानेतुमुदकं ययौ । घटेन स्वर्णवर्णेन सर्वालङ्कारशोभया ॥ ३६ ॥

सौमित्रिरप्यूर्मिलया माण्डव्या भरतो नृपः ।
शत्रुघ्नः श्रुतकीर्त्या च कान्तिमत्या च पुष्कलः ॥ ३७ ॥
सुबाहुः सत्यवत्या च सत्यवान्वीरभूषया ।
सुमदस्तत्र सत्कीर्त्या रत्नया च विमलो नृपः ॥ ३८ ॥

राजा वीरमणिस्तत्र श्रुतवत्या मनोज्ञया । लक्ष्मीनिधिः कोमलया रिपुतापोऽङ्गसेन
विमलो महाभूम्यां प्रतापाग्र्यः प्रतीच्या । उग्राश्वः कामगमया नीलरत्नोऽधिराज

सुरथः सुमनोहार्या तथा मोहतया कपिः ।
इत्यादीन्नृपतीन्विप्रो वसिष्ठः प्राहिणोन्मुनिः ॥ ४१ ॥

वसिष्ठः सरयूं गत्वा शिवपुण्यजलाप्लुताम् । उदकं मन्त्रयामास वेदमन्त्रेण मन्त्रवि
पयः पुनीहसुं वाहमुदकेन मनोहृता । यज्ञार्थं रामचन्द्रस्य सर्वलोकैकरक्षितुः ॥ ४
उदकं तन्मुनिस्पृष्टं सर्वे रामादयो नृपाः । आजह्रुर्मण्डपतले विस्मयैर्दपस्तु ते ॥ ४

पयोभिर्निर्मलैः स्नाप्य वाजिनं क्षीरसन्निभम् ।
मन्त्रेण मन्त्रयामास रामहस्तेन कुम्भजः ॥ ४५ ॥

पुनीहि मां महाबाहो अस्मिन्ब्रह्मसमाकुले । त्वन्मेधेनाखिलाद्देवाःप्रीयन्तु परितोषि
इत्युक्त्वा स नृपोरामःसीतया सममस्पृशत् । तदा सर्वे द्विजाधिश्रमभण्यन्तकुतूहल
परस्परममोचंस्ते यन्नामस्मरणान्नराः । महापापात्प्रमुच्यन्ते स रामःकिं वदत्यहो
इत्युक्तवति भूमीशे रामे कुम्भोद्भवोमुनिः । करवालं चाभिमन्त्र्या ददौ रामकरे मुनि
करवाले धृतेस्पृष्टे रामेण सहयःक्षतो । पशुत्वं तु विहायाशु दिव्यरूपमपद्यत ॥ ५
विमानवरमारूढश्चाप्सरोभिःसमन्ततः । चामरैर्वीज्यमानश्च वैजयन्त्या विभूषित

तदा तं वाजितां त्यक्त्वा दिव्यरूपधरं वरम् ।
वीक्ष्य लोकाःक्षतो सर्वे विस्मयं प्राप्नुवंस्तदा ॥ ५२ ॥

तदा रामःस्वयं जानञ्ज्ञापयन्सर्वतो नरान् । पप्रच्छ दिव्यरूपं तं सुरं परमधार्मिक

कस्त्वं दिव्यवपुः प्राप्तः कस्मात्त्वं वाजितां गतः ।
कथं सुरस्त्रीसहितःकिं चिकीर्षसि तद्वद ॥ ५४ ॥

रामस्य वचनंश्रुत्वा देवःप्रोवाच भूमिपम् । हसन्मेघरवां वाणीमवदत्सुमनोहरा
सर्वज्ञातं न सर्वत्र बाह्याभ्यन्तरचारिणः । तथापि पृच्छते तुभ्यं कथयामि यथात
अहं पुरा भवे राम द्विजःपरमधार्मिकः । अचरं प्रतिकूलं वै वेदस्य रिपुतापन ॥ ५
कदाचिद्धूतपापायास्तीरेऽहं गतवान्पुरा । अनेकवृक्षललिते सर्वत्र सुमनोरमे ॥ ५

तत्र स्नात्वा पितॄंस्तृप्त्वा दानं दत्वा यथाविधि ।
ध्यानं तत्र महाबाहो कृतवान्वेदसंमितम् ॥ ५६ ॥

तच्चित्रं वीक्ष्य मुनयः कृतार्थं मेनिरे निजम् । यद्रामचरणप्रेक्षा करस्पर्शपवित्रितम् ॥
गते तस्मिन्सुरे स्वर्गे हयरूपधरे पुरा । उवाच रामस्तपसां निधीन्वेदविदुत्तमान् ॥
किं कर्तव्यं मयाब्रह्मन्हयो नष्टो गतःसुखम् । होमः कथं पुरो भावी सर्वदैवततर्पकः ॥

यथा स्यात्सुरसन्तृप्तिर्यथा मे मख उत्तमः ।
तथा कुर्वन्तु मुनियो यथा मे स्याद्विधिश्रुतम् ॥ ८३ ॥

इति वाक्यं समाश्रुत्य जगाद मुनिसत्तमः । वसिष्ठः सर्वदेवानां विज्ञानिज्ञानकोविदः
कर्पूरमाहर क्षिप्रं येन देवाः स्वयं पुरा । प्राप्य हव्यं ग्रहीष्यन्ति मद्वाक्यप्रेरिताधुना ॥
इति वाक्यं समाकर्ण्य रामः क्षिप्रमथाहरत् । कर्पूरं बहुदेवानां प्रीत्यर्थं बहुशोभनम् ॥
तदा मुनिः प्रहृष्टात्मा देवानाह्वयदद्भुतान् । ते सर्वे तत्क्षणात्प्राप्ताःस्वपरीवारसंवृताः

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसंवादे रामाश्वमेधे
यज्ञप्रारम्भो नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः

### रामस्य यज्ञान्तस्नानम् ।

शेष उवाच ।

इन्द्रस्तत्र हविर्मूर्ध्नं रामचन्द्रेण वीक्षितम् । परिस्पार्द कती तृप्ति ॥ प्राप सुरसंयुतः ॥
नारायणो महादेवो ब्रह्मा तत्र चतुर्मुखः । वरुणश्च कुबेरश्च तथाऽन्ये लोकपालकाः ॥

तत्रास्वाद्य हविः स्निग्धं वसिष्ठेन परिष्कृतम् ।
तत्र पुनर्हि विप्रेन्द्राः क्षुधार्ता इव भोजनात् ॥ ३ ॥

सर्वान्देवांश्च सन्तर्प्य हविषा करुणानिधिः । वसिष्ठप्रेरितः सर्वमिति कर्तव्यमाचरत्

ब्राह्मणा दानसन्तुष्टाः हविस्तुष्टाः सुराधराः ।
रामः सर्वे स्वकं भागं गृहीत्वा स्वालयं ययुः ॥ ५ ॥

ऋत्विग्भ्यो होतृमुख्येभ्यः प्रादाद्राज्यं चतुर्दिशम् ।
सन्तुष्टास्ते द्विजा राममाशीर्भिरददुः शुभम् ॥ ६

पूर्णाहुतिं ततः कृत्वा वसिष्ठः प्राह सुस्त्रियः । वर्धापयन्तु भूमीशं यागपूर्तिकरं परम् ॥
तद्वाक्यं ताः स्त्रियः श्रुत्वा लाजैरवाकिरन्मुदा । लावण्यजितकन्दर्पं महामणिविभूषितम्
ततोऽवभृथस्नानार्थं प्रेरयामास भूमिपम् । ययौ रामः सह स्त्रीयैः सरयूतीरमुत्तमम्
अनेकराजकोटीभिः परीतः पादचारिभिः । जगाम ससरिच्छ्रेष्ठां पक्षिवृन्दसमाकुलाम्
तारापतिरिवस्वाभिर्भार्याभिर्वृतउरुप्रभः । विरोचते तथा सद्रामो राजपत्नीवृतः ॥
तद्दुरत्ययं समाज्ञाय ययुर्लोकास्त्वरायुताः । सीतापतिमुखालोकनिश्चलीभूतलोचनाः

राजेन्द्रं सीतया सार्द्धं गच्छन्तं सरितम्प्रति ।
विलोक्य मुदिता लोकाश्चिरं दर्शनलालसाः ॥ ॥ १३ ॥

अनेकनटगन्धर्वा गायन्तो यश उज्ज्वलम् । अनुजग्मुर्महीशानं सर्वलोकनमस्कृतम् ।

नर्तक्यस्तत्र नृत्यन्त्यः क्षोभयन्त्यः पतेर्मनः ।
जलयन्त्रैश्च सिञ्चन्त्यो ययुः श्रीरामसेवनम् ॥ १५ ॥

महाराजं विलिम्पन्त्यो हरिद्राकुङ्कुमादिभिः । परस्परं प्रलिम्पन्त्यो मुदं प्रापुर्महत्तराम्
कुचयुग्मोपरिन्यस्तमुक्ताहारसुशोभिताः । श्रवणद्वन्द्वसंसृष्टस्वर्णकुण्डललक्षिताः ॥११
अनेकनरनारीभिः सङ्कीर्णं मार्गमाचरन् । यया वत्सरितं प्राप शिवपुण्यजलाप्लुताम्
तत्र गत्वा स वैदेहा रामः कमललोचनः । प्रविवेश जलं पुण्यं वसिष्ठादिभिरन्वितः ।
अनुप्रविविशुः सर्वे राजानो जनतास्तथा । तत्पादरजसा पूतजलं लोकैकपावनम् ॥
परस्परं प्रसिञ्चन्तो जलयन्त्रैर्मनोरमैः । कुशोणनयनाः सर्वे हर्षं प्रापुर्मनोऽधिकम् ॥
स रामः सीतया सार्धं चिरं पुण्यजलप्लवे । क्रीडित्वा जलकल्लोलैर्निरगाद्धर्मसंयुतः ।

दुकूलवासाः सकिरीटकुण्डलः केयूरशोभावरकङ्कणान्वितः ।
कन्दर्पकोटिप्रियसुन्दररूपो राजाग्र्यवर्यैरुपसंस्तुतो बभौ ॥ २२ ॥
स यागपूर्णं परपर्वशोभितं कृत्वा सरित्तीरवरे महामनाः ।
त्रैलोक्यलोकप्रियमाप सद्गुणामन्यैर्दुरापां नृपतिर्मुनीशैः ॥ २४ ॥

एवं जनकपुत्र्याऽसौ हयमेधत्रयं चरन्। त्रैलोक्ये कीर्तिमतुलां प्राप देवैः सुदुर्लभाम्

एवं ते वर्णितं तात यत्पृष्टो रामसत्कथाम् ।
विस्तृतः कथितो मेधो भूयः किं पृच्छसे द्विज ॥ २६ ॥
यः शृणोति हरेर्भक्त्या रामचन्द्रस्य सन्मखम् ।
ब्रह्महत्यां क्षणात्तीर्त्वा ब्रह्मशाश्वतमाप्नुयात् ॥ २७ ॥
अपुत्रस्तो लभते पुत्रान्निर्धनो धनमाप्नुयात् ।
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ २८ ॥

यत्कथाश्रवणाद्दुष्टः श्वपचोऽपि परं पदम् । प्राप्नोति किमु विप्राग्र्यो रामभक्तिपरायणः
रामंस्मृत्वा महाभागं पापिनः परमं पदम् । प्राप्नुयुः परमंस्वर्गं शक्रदेवादिदुर्लभम् ॥

ते धन्या मानवा लोके ये स्मरन्ति रघूत्तमम् ।
ते क्षणात्संसृतिं तीर्त्वा गच्छन्ति सुखमव्ययम् ॥ ३१ ॥

प्रत्येकमक्षरं ब्रह्म हत्यायंशाद्वयामलः । तं यः श्रावयते धीमांस्तं गुरुं सम्प्रपूजयेत् ॥३२॥
श्रुत्वा कथां वाचकाय गवां द्वन्द्वं प्रदापयेत् ।सपत्नीकाय सम्पूज्य वस्त्रालङ्कारभोजनैः

कुण्डलाभ्यां विराजन्त्यौ मुद्रिकाभिरलङ्कृते ।
रामसीते स्वर्णमय्यौ प्रतिमे शोभने वरे ॥ ३४ ॥

कृत्वा तु वाचकायैव दातव्ये भोद्विजोत्तम । तस्य देवाश्च पितरो वैकुण्ठंप्राप्नुयुस्तदा ॥
त्वया पृष्टा रामकथामयातेकथितापुरा । किमन्यत्कथ्यतांब्रह्मन्पुरतस्तवधीमतः ॥३६॥

शृण्वन्ति येकथामेतांब्रह्महत्यौघनाशिनीम् ।
ते यान्ति परमं स्थानं यत्न देवैः सुदुर्लभम् ॥ ३७ ॥

गोघ्नश्चापि सुतघ्नश्च सुरापो गुरुतल्पगः । क्षणात्पूतो भवत्येव नात्र संशयितुं क्षमम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शेषवात्स्यायनसम्वादे रामाश्वमेध-
श्रवणपठनपुण्यवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

इतिरामाश्वमेधः समाप्तः ।

---

## शततमोऽध्यायः

### कश्यपेन महीधरस्य वैशाखे स्नापनम्।

श्रीराजोवाच।

क्षीरोदजलतुल्याभिःशीतलामलदृष्टिभिः।सत्याभिश्चविचित्राभिस्त्वयागीर्भिःप्रबोधितः
भवसागरोत्थं पीयूषमद्रव्यं व्यसनौषधम्। त्वयाऽहं पायितः सौम्य भवरोगनिवारणम्
हर्षप्रदो नृणां पापहानिसञ्जीवनौषधम्। जरामृत्युहरो विप्र सद्भिः किल समागमः॥
यानियानिदुरापानियाञ्छितानिमहीतले। प्राप्यन्ते तानि तान्येव साधूनामेव सङ्गमात्
यःस्नातःपापहरयासाधुसङ्गमगङ्गया। किं तस्य दानैः किंतीर्थैः किंतपोभिः किमध्वरैः

निमज्ज्योन्मज्जतां नृणां भवाब्धौ परमायनम्।
सन्तो धर्मविदः शान्ता नौ दृढेवाप्सु मज्जताम्॥ ६ ॥

यो मे भावः पुरा ह्यासीत्कामैकसुखलालसः। दर्शनाद्भवतोऽद्य विपरीतोऽभवद्विभो

एक जन्मसुखस्यार्थे सहस्राणि विलोपयेत्।
प्राक्तो जन्मसहस्राणि सञ्छिनोत्येकजन्मना॥ ८॥

हाहाकामरसास्वादसुखलालसचेतसा। मया मूढेन न कृतं किञ्चिदात्महितं द्विज॥९॥
अहो मे मनसो मोहो येनात्मा योषितां कृते। पातितो व्यसने घोरे दुःखोदर्के दुरत्यये
भगवन्परितुष्टोऽस्मि बोधितो वचनेन ते। उपदेशप्रदानेन मामुद्धर्तुमिहार्हसि॥ ११॥

पुराऽऽचरितपुण्योऽहं भवता बोधितोऽस्मि यत्।
त्वत्पादरजसा चाऽपि विशेषादपि पावितः॥ १२॥

विधिं माधवमासस्य ब्रूहि मे वदतांवर!। सर्वपापक्षयकरो यस्त्वया परिकीर्तितः॥
किं दानं तत्र किंस्नानं को देवो नियमास्तु के। एतदाचक्ष्व विप्रर्षे दुरितोत्तारणाय मे

यम उवाच।

इत्येवमुक्तो भगवान्कश्यपः स दयानिधिः। ... ऽभ्यहितंगुमन्

कश्यप उवाच ।

पूर्वापरसमाधानक्षमबुद्ध्या [illegible] ते नृप ! । पूर्वं प्राक्तेन वक्तव्यं माघमे पापमानसे ॥१६
पापप्रवृत्तस्य तथा दत्त्वा भूप शुभां मतिम् । विद्यादानफलं सम्यक्प्राप्यते नात्र संशयः

नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ १८ ॥
विदुषामपि शिष्याणां पुत्राणां [illegible] क्रियावताम् ।
अपृष्टमपि वक्तव्यं श्रेयः श्रद्धावतां हितम् ॥ १९ ॥

साम्प्रतं शुद्धहृदयो जातस्त्वं वचनान्मम । पुरा चरितपुण्येन केनापि च महीपते! ॥२०
पापावस्थं शरीरं तद्गतं तव ममाश्रयात् । श्रवणाद्धर्मशास्त्रस्य धर्मावस्थं तु तेऽभवत्
पापावस्थमधर्माख्यं धर्मज्ञानविवर्जितम् । अपरं सद्गुमतं यद्धि विज्ञेयं तद्धि धार्मिकम्
धर्माधर्मोपभोगाय तत्तृतीयमतीन्द्रियम् । तत्त्रिभेदं शरीरं हि धर्मविद्भिरिहोच्यते ॥
यावता धर्मभोगश्च मुक्तिश्चैतत्त्रिभेदकम् । पापावस्थं शरीरं तत्पापसंज्ञं तदुच्यते ॥
इदानीं गुरुभक्तिं च कुर्वतश्च वचो मम । शृण्वतो धर्मरूपं तु शरीरं ते व्यवस्थितम् ॥
तेनैव शुद्धिरमला जाता धर्मक्रियोचिता । दैवेन देहिनां नाम चेतांसि चरितानि च ॥
शरीराणि च पुष्यन्ति काले काले विपर्ययम् । साम्प्रतं भवतश्चेतो नूनं धर्मे प्रवर्तते ॥

तेन त्वां कारयिष्यामि माघस्नानमुत्तमम् ॥ २८ ॥

यम उवाच ।

ततस्तु कारितस्तेन कश्यपेन पुरोधसा । स नृपो माघवे मासि स्नानं दानं च पूज

यथा दृष्टं पुरा शास्त्रे वैशाखस्नानजं विधिम् ।
स मुनिः प्रत्युवाचासौ भूपाय च यथोदितम् ॥ ३० ॥
श्रावितः स्तोत्रसारं च पाठितो हरिमेधसः ।
श्रुते यस्मिन्नधीते च स सम्यक्फलमाप्नुयात् ॥ ३१ ॥
स कारितस्तेन विशुद्धभावो राजाऽपि चक्रे विधिवत्तदानीम् ।
श्रीमाधवे मासि विधानमीड्यं ततो यथाऽऽकर्णितमादरेण ॥३२॥

स्नानं च पाद्यं च ह्यर्घं च हरिपूजनम् । नैवेद्यं भक्तिभावेन चकार स नृपोत्तमः
दानं यथा नियमपालनमादरेण वैशाखमासि विदधाति विधानमेवम् ।
यो भक्तितोऽन्वहमसौ प्रतिवर्षमेवं कृत्वा प्रयाति हरिधाम महीसुराग्र्यः ॥३४
रेषु मासेषु कामिनीकुचकेलिवान् । भोगैकलालसो भूयो भवत्येवं यथारुचि ॥
नियमं राजकार्येषु न विचारणम् । करोति कामवशगो हित्वा मासं समाधवम्
मपि विप्राग्र्य ! दुर्निवार्यो मनोभवः । शरीरसहजो नूनमनादिर्वासनात्मकः ॥
लशालिन्यो दुःस्पर्शालोचनप्रियाः । यस्मादग्निशिखा नार्यो दहन्ति तृणवन्नरम्
न्तुः शरीरस्थः पुंसां कामो यथोचितम् । मोहधूममयः पापो न केषामान्ध्यकारकः
ीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमासमाहात्म्ये शततमोऽध्यायः ॥

---

# एकाधिकशततमोऽध्यायः

## महीधरदेवदूतसंवादे यमलोकस्थानेकपापिपापविपाकनिरूपणम् ।

यम उवाच ।

लकटाक्षेण लक्षितो नृपतिस्तदा । मृतोऽतिरतिसेवोत्थक्षयक्षीणकलेवरः ॥[illegible]
णो यमगणैस्ताड्यमानो मुहुर्मुहुः । क्रन्दमानो महाराजस्तस्मरन्निजपातकम्
तैः समागत्य ताडयित्वा ममानुगान् । धर्मवानयमित्युक्त्वा विमानमधिरोपितः
रिपुरं भूपः स्तूयमानोऽप्सरोगणैः । प्राग्जन्मस्नानेन वैशाखमासस्य क्षीणपातकः
विहीनोऽयमिति मत्वा च तैः पुनः । देवदूतैर्निर्देशेन विष्णोर्भूमिपतिस्तदा ॥
निरयवर्त्मना [illegible] समाहितः । [illegible] गच्छन्नपि शुश्राव जीवानां क्रन्दनं पुनः ॥
मानानामारावं विविधं तदा । पापिनां पच्यमानानामाक्रन्दमति दारुणम्
श्रुत्वा विस्मयपान्वित्र ! राजाऽभूदतिदुःखितः ।
दूताः किमयमाक्रन्दो दारुणः श्रुतः । पुनर्न श्रूयते कस्मै कारणं वक्ष्मेद्य १८॥

दूता ऊचुः ।

जन्तवस्त्यक्तमर्यादाः पापान्याचारवर्जिताः। निरयेषु च घोरेषु तामिस्रादिषु पातिताः
कृतपातकिनस्त्वत्र प्राणत्यागादनन्तरम् । याम्यं पन्थानमाश्रित्य दुःखमश्नन्ति दारुणम्
यमस्य पुरुषैर्घोरैः कृष्यमाणा इतस्ततः । अन्धकारे निपतिता भक्ष्यन्ते हतिदारुणैः ॥
श्वभिः शृगालैः क्रव्यादैः काककङ्कवृकादिभिः । अग्नितुण्डैश्च क्रव्यादैर्भुजगैर्वृश्चिकादिभिः
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः । क्रकचैः पाट्यमानाश्च पीड्यमानाश्च तृष्णया
क्षुधया बाध्यमानाश्च घोरैर्व्याधिगणैस्तथा । पूयशोणितगन्धेन मूर्छ्यमानाः पदे पदे

क्वथ्यन्ते च क्वचित्तैले ताड्यन्ते मुसलैः क्वचित् ।
आयसीषु प्रपच्यन्ते शिलासु क्वचिदेव च ॥ १५ ॥
क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक् क्वचित् ।
क्वचिद्विष्ठां क्वचिन्मांसं पूतिगन्धिषु दारुणम् ॥ १६ ॥

कृमिभिर्भक्ष्यमाणाश्च वह्नितुण्डैः क्वचित्क्वचित् । केशशोणितमांसास्थिवसास्थिनिकरेषु च

क्षान्धिताः कुणपाः कीर्णाः कृमिभिर्भक्षिताः स्फुटम् ।
काककङ्कमहागृध्रवदनैर्ध्वंसितेषु च ॥ १८ ॥

शिवदुर्गन्धनीरन्ध्रसङ्कटशतकोटिषु । करपात्रशिलापत्रतप्तनिस्तैलकेषु च ॥ १९ ॥
लोहतैलवसास्तम्भकूटशाल्मलसद्मसु । क्षुरकण्टककीलोग्रज्वालास्तम्भपिमातिषु ॥२०
सप्त वैतरणीपूयपूरितेषु पृथक्पृथक् । असिपत्रवनोत्कृत्तनरनारीस्तनेषु च ॥ २१ ॥
घोरान्धकारग्रहणदारुणेषु मुहुर्मुहुः । पापच्यमानाः क्रन्दन्तो दारुणैर्विविधैः स्वरैः ॥

कण्ठेषु बद्धपाशाश्च भुजगावेष्टिताः क्वचित् ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ २३ ॥

भग्नपृष्ठशिरोग्रीवाः स्तब्धकण्ठाः सुदारुणाः । कूटागारे भ्राम्यमाणाः शरीरैर्यातनाश्रयैः

पीड्यन्ते पापिनो राजन्क्रन्दमाना विकर्मिणः ।
सहितं विषयास्वादैः क्रन्दनं तैर्विधीयते ॥ २५ ॥

च कृतं पूर्वमेतत्सर्वैश्च जन्तुभिः । परस्त्रीषु कृतः सङ्गः प्रीतये दुःखदो हि सः

मुहूर्तविषयास्वादो जातोऽनेकाब्ददुःखदः । वपुषस्तव राजेन्द्र प्रातः स्नानस्य माधवे
विधिना पावनस्यैते मरुतः स्पर्शमाप्य तु ।
लब्धसौख्याः क्षणं जाता महसाप्यायितास्तव ॥ २८ ॥
आक्रन्दरहितास्तेन जातास्ते निरये स्थिताः ।
नामापि पुण्यशीलानां श्रुतं सौख्याय कीर्तितम् ॥ २९ ॥
जायते तद्वपुस्पर्शवायुस्पर्शः सुखावहः ॥ ३० ॥

यम उवाच ।

इति दूतवचः श्रुत्वा स राजा करुणानिधिः । प्रत्युवाच ह तान्दूतान्विष्णोरद्भुतकर्मणः
कोमलं हृदयं नूनं साधूनां नवनीतवत् । यद्विसन्तापसन्तप्तं तद्यथा द्रवति स्फुटम् ॥

राजोवाच ।

नाहं जन्तुमहं हित्वा पीडितं गन्तुमुत्सहे । तं पापिष्ठं धिगार्तानामार्तिशक्तो न हन्ति यः
मदङ्गसङ्गमोच्छिष्टवायुस्पर्शेन ते यदि । जन्तवः सुखिनो जातास्तस्मात्तत्र नयन्तु माम्
पविभवन्ति जननीमवनीमपि ते नराः । परतापच्छिदो ये तु चन्दना इव चन्दनम् ॥
परोपकृतये ये तु पीड्यन्ते कृतिनो हि ते । सन्तस्त एव ये लोके परदुःखविदारणाः ॥
आर्तानामार्तिनाशार्थं प्राणा येषां तृणोपमाः । तैरियं धार्यते भूमिर्नरैः परहितोद्यतैः ॥
मनसो यत्सुखं नित्यं स स्वर्गो नरकोपमः । तस्मात्परसुखेनैव सुखिनः साधवः सदा
वरं निरयपातोऽत्र वरं प्राणवियोजनम् । न पुनः क्षणमार्तानामार्तिनाशमृते सुखम् ॥

दूता ऊचुः ।

जन्तवो निरये घोरे पच्यन्ते तेऽत्र पापिनः । स्वकर्मैवोपजीवन्ति मोहस्थानं न विद्यते
यैर्न दत्तं न च हुतं तीर्थे स्नानं न वा कृतम् । पुनर्नोपकृतं भक्त्या सुकृतं न कृतं परम्
नेष्टं न तप्तं नो जप्तं यैर्न हृष्टतया नृप ! । परस्मिन्निह घोरेषु पच्यन्ते निरयेषु ते ॥
दुःशीला ये दुराचारा विहाराहारनिन्दिताः । परापकारिणः पापकारिणो दुर्विहारिणः
विदारिणो हि मर्मोच्चया पापाः परहृदां हि ये ।
निरये ते विपच्यन्ते ये परस्त्रीविहारिणः ॥ ४४ ॥

दूता ऊचुः ।

जन्तवस्त्यक्तमर्यादाः पापास्त्वाचारवर्जिताः। निरयेषु च घोरेषु तामिस्रादिषु पापि
कृतपातकिनस्त्वत्र प्राणत्यागादनन्तरम् । याम्यंपन्थानमाश्रित्य दुःखमश्नन्ति दुष्
यमस्य पुरुषैर्घोरैः कृष्यमाणा इतस्ततः । अन्धकारे निपतिता भक्ष्यन्ते ह्यतिदारु
श्वभिः शृगालैः क्रव्यादैःकाककङ्कबकादिभिः । अग्नितुण्डैर्वृकव्याघ्रैर्भुजगैर्वृश्चिकै
अग्निना दह्यमानाश्च तुद्यमानाश्च कण्टकैः । क्रकचैः पाट्यमानाश्च पीड्यमानाश्च
क्षुधया बाध्यमानाश्च घोरैर्व्याधिगणैस्तथा । पूयशोणितगन्धेन मूर्च्छयमानाः प
क्वथ्यन्ते च क्वचित्तैले ताड्यन्ते मुशलैः क्वचित् ।
आयसीषु प्रपच्यन्ते शिलासु क्वचिदेव च ॥ १५ ॥
क्वचिद्वान्तमथाश्नन्ति क्वचित्पूयमसृक् क्वचित् ।
क्वचिद्विष्ठां क्वचिन्मांसं पूतिगन्धिषु दारुणम् ॥ १६ ॥
कृमिभिर्भक्ष्यमाणाश्चवह्नितुण्डैःक्वचित्क्वचित् । केशशोणितमांसास्थिवसाहिमशीतो
आम्पिताः कुणपाः कीर्णाः कृमिभिर्भक्षिताः स्फुटम् ।
काककङ्कमहागृध्रवदनैर्ध्वंसितेषु च ॥ १८ ॥
शिवदुर्गन्धभीरन्ध्रसङ्कटशतकोटिषु । करपात्रशिलापत्रतप्तनिस्तैलकेषु च ॥ १९ ॥
लोहनैत्यतास्रतम्रकूटशाल्मलसद्मसु । क्षुरकण्टककीलोग्रज्वालास्तम्भयिभागि
तप्तं वैतरणीपूयपूरितेषु पृथक्पृथक् । असिपत्रवनोत्कृतनरभारोहरणेषु च । 
घोरान्धकारप्रदरणदारुणेषु मुहुर्मुहुः । पापच्यमानाः क्रन्दन्तो दारुणैर्विविधै
कण्ठेषु बद्धपाशाश्च भुजगावेष्टिताः क्वचित् ।
पीड्यमानास्तथा यन्त्रैः कृष्यमाणाश्च जानुभिः ॥ २३ ॥
भग्नपृष्ठशिरोग्रीवाः स्तब्धकण्ठाः सुदारुणाः । कूटागारे भ्राम्यमाणाः शरीरैर्
पीड्यन्ते पापिनो राजन्क्रन्दमाना विकर्मिणः ।
सहितं विषयास्वादैः क्रन्दनं तैर्विधीयते ॥ २५ ॥
भुज्यते च हृतं पूर्वमेतच्छ्रयैश्च जन्तुभिः । परस्त्रीषु हृताः सद्भुः प्रीतये दुष्कृ

दुर्नैविषयास्वादो जातोऽनेकाब्ददुःखदः । वपुषस्तव राजेन्द्र प्रातः स्नानस्य म

विधिना पावनस्यैते मरुतः स्पर्शमाप्नुवन् ।

लब्धसौख्याः क्षणं जाता महसाप्यायितास्तव ॥ २८ ॥

आक्रन्दरहितास्तेन जातास्ते निरये स्थिताः ।

नामापि पुण्यशीलानां श्रुतं सौख्याय कीर्तितम् ॥ २९ ॥

जायते तद्वपुस्पर्शवायुस्पर्शः सुखावहः ॥ ३० ॥

यम उवाच ।

इति दूतवचः श्रुत्वा स राजा करुणानिधिः । मरयुवाच ह तान्दूतान्विष्णोरद्भुतक

कोमलं हृदयं नूनं साधूनां नवनीतवत् । वह्निसन्तापसन्तप्तं तद्यथा द्रवतिस्फुट

राजोवाच ।

नार्तं जन्तुमहं हित्वा पीडितं गन्तुमुत्सहे । तं पापिष्ठं धिगार्तानामार्तिशक्तो न ह

मदङ्गसङ्गमोच्छिष्टवायुस्पर्शेन ते यदि । जन्तवः सुखिनो जातास्तस्मात्तत्र नयन्तु

पवित्रयन्ति अन्नानामपनामपि ते नराः । परतापच्छिदो ये तु चन्दना इव चन्द

परोपकृतये ये तु पीड्यन्ते कृतिनो हि ते । सन्तस्त एव ये लोके परदुःखविदारण

आर्तानामार्तिनाशार्थं प्राणा येषां तृणोपमाः । तैरियं धार्यते भूमिर्नरैः परहितोद

मनसो परसुखे नित्यं तत्स्वर्गो नरकोपमः । तस्मात्परसुखेनैव सुखिनः साधवः

वरं निरयपातोऽत्र वरं प्राणवियोजनम् । न पुनः क्षणमार्तानामार्तिनाशमृते सुख

दूता ऊचुः ।

अन्तपो निरये घोरे पच्यन्ते तेऽत्र पापिनः । स्वकर्मैवोपजीवन्ति मोहस्थाने न

येनं दत्तं न च हुतं तीर्थे स्नानं न वा कृतम् । पुनर्नोपकृतं नवशा सुकृतं न कृतं

नेष्टं न तप्तं नो जप्तं येनं कृपया नृप ! । यस्मिन्निह घोरेषु पच्यन्ते निरयेषु

दुःशीला ये दुराचारा विहाराहारनिन्दिताः । परापकारिणः पापकारिणो दुर्विहा

विद्वारिणो हि मर्मोक्त्या पापाः परद्वारे हि ये ।

निरये ते विपच्यन्ते ये परस्त्रीविहारिणः ॥ ४५ ॥

यदि नूनं महीपाल गच्छामो हरिमन्दिरम् । न ते पुण्यफलोद्भूतमिह स्थातुमतःपा

राजोवाच ।

यद्यहं सुधर्मी दूताः कस्मादस्मिन्महाभये । नारके पतितो वा मतः किं वा मे सुकृतं

मयाऽपि न कृतं ताद्दृक्सुकृतं कामचारिणा । कथं पुण्यहरैर्नीता संसारेऽत्रमस्मि

दूता ऊचुः ।

सुकृतं न कृतं सत्यं त्वयाकामवशात्मना । नेष्टं यज्ञैर्नेयता यज्ञावशिष्टं मयताऽशिम्म

किंतु माधवमासे यद्विधिना परस्परमयम् । प्रातः स्नात्वा गुरुवचः प्रेरितेन पुरात्व

भक्त्या सम्पूजितो विष्णुर्विश्वेशो मधुसूदनः । महापापातिपापौघनिहन्ता भक्तवत्सल

सर्वधर्मैकसारेण तेनैवेन नरेश्वर ! । नीयते पुण्यभवनं पूज्यमानो मरुद्गणैः ॥५१

महतामपि पापानां निहन्ता माधवोऽर्चितः ।

तथैव माधवो मासो मर्त्यानां विधिनोदितः ॥ ५२ ॥

यथैव विस्फुलिङ्गेन ज्वाल्यते तृणसञ्चयः । प्रातः स्नानेन वैशाखे तथाऽघौघोऽपिसह्यते

तावद्वपुषि पापानि प्रभवन्ति महान्त्यपि । यावन्न माधवेमासि तीर्थे मज्जति चोषसि ॥

वैशाखेमासि यो युक्तो यथोक्तनियमैर्नरः । हरिभक्त्यैव पापौघैर्मुक्तोऽच्युतगृहंमजे

आजन्मनो हि सुकृतं यस्त्वया न पुराकृतम् । तेनत्वं निरयस्थानमार्गं नीतो नरेश्वर! ॥

अथ भूमिपते तूर्णमस्माभिस्तु मरुद्गणैः । स्तूयमानो विमानेन गच्छगोविन्दमन्दिरम्

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये एकोत्तरशततमोऽध्यायः

## द्व्युत्तरशततमोऽध्यायः

### महीधरप्रदत्तवैशाखमासीयैकदिनपुण्येन नारकिसमुद्धारवर्णनम् ।

यम उवाच ।

ततस्तु करुणावारिधिस्तेषां शोकेन पीडितः । भूपतिः श्रीहरेर्दूतान्विनयेनाह वाडव! ॥

यद्यस्ति सुकृतं किञ्चिन्मम तेनैव जन्तवः ।
स्वर्गं गच्छन्तु मुक्तौघाः स्थाने तेषां वसाम्यहम् ॥ ३ ॥

एवं भूपवचः श्रुत्वा तस्य सत्यवतो हि ते । ध्यायन्तः सत्यमौदार्यमब्रुवंस्ते वचोनृपम्
दूता ऊचुः ।

अनेन तव कारुण्यकर्मणा वचसा नृप ! । बभूव वृद्धिर्धर्मस्य सञ्चितस्य विशेषतः ॥५॥
स्नानं दानं जपो होमस्तपो देवार्चनादिकम् । कृतं यन्माधवे मासि तदनन्तफलं विदुः
स्वर्गे यद्धा च दाता च क्रीडते त्रिदशैःसह । वापीषु हेमपद्मासु कल्पवृक्षतलेऽपि च ॥
गीयमानो मुदं याति गीर्वाणरमणीगणैः । जलान्नदानतो लोकं लभते वारुणं शुभम् ॥
कुलानि हेलया सप्त सन्तारयति गोप्रदः । हयं दत्त्वा रवेर्लोकं याति विप्रप्रदो नरः ॥

ब्रह्मलोकं तथा हेमदानाद्याति सुरालये ।
यो ददाति तथा कान्यां विष्णुलोकं स गच्छति ॥ १० ॥
माधवे मासि यः स्नात्वा दत्त्वा सम्पूज्य माधवम् ।
अवाप्य सकलान्कामान्प्रयाति पदमव्ययम् ॥ ११ ॥
एकतोऽपि तपोदानक्रतुमुख्यादिकाःक्रियाः ।
एकतो विधिवन्मासो माधवश्चरितो महान् ॥ १२ ॥

तस्य माधवमासस्य दिनैकस्यापि भूपते ! । कृतं यत्सुकृतं तत्ते सर्वदानादिकं पुरा ॥१३
कारुण्येन दिनैकस्य पुण्यं देहि धरापते ! । निरये पच्यमानेभ्यो दुःखितेभ्यो दयानिधे ! ॥
न दयासदृशो धर्मो न दयासदृशं तपः । न दयासदृशं दानं न दयासदृशः सखा ॥१६॥
पुण्यद पुण्यमाप्नोति नरो लक्षगुणं सदा । कारुण्येन विशेषाच्च धर्मवृद्धिस्ततो भवेत्
दुःखितानां हि भूतानां दुःखोद्धर्त्ता नरोहियः । स एवसुकृतीलोके ज्ञेयोनारायणांशजः
वैशाखेमासि पूर्णायां स्नानदानादिकं त्वया । यत्तीर्थे विहितं धीर सर्वाघविनिषूदनम्

तदेभ्यो देहि विधिवत्कृत्वा साक्ष्ये हरिं प्रभुम् ।
त्रियाचिकं च निरयादेनामी स्वर्गमाप्नुयुः ॥ १६ ॥

कपोतार्थं स्वमांसानिकारुण्येनपुराशिबिः । दत्त्वाद्यानिधिःस्वर्गेराजतेकीर्तिवारिधिः

दर्शाभिरपि शार्ङ्गस्य श्वाऽभिनयमात्मनः ।
त्रैलोक्यकौमुदीं कीर्ति लब्धवान्स्वर्गमक्षयम् ॥ २८ ॥

तदत्रभिष राजर्षिः प्राणानिशाम्य महायशाः । ब्राह्मणार्थे परित्यज्य मनो लोकाननुत्तमा
न स्वर्गं गायपर्गोऽपि तत्पुण्यं लभते नरः । यद्दानं जन्तुनिर्वाणदानोत्थमिति नो मति
सर्वेषु दानुशालेषु पुराजातोऽसि भूपते ! । कर्मणाऽनेन सद्धयाशु धुरियैं नियोज्य
दृष्ट्वा तद्विधं धर्मं दयादानं सुनिश्चलम् । अस्माभिरपि तत्साहःक्रियते धर्मयादिभि
यदि ते रोचते राजन्पितॄणामनया ततः । तद्भ्यो देहि तत्पुण्यं यातनादुःखदाहकम् ।

इत्युक्तः [illegible] तदा देवं दृष्ट्वा सात्त्वे गदाधरम् ।
तेभ्यस्त्रिविधानिकं पुण्यं दयावान्विधिना ददौ ॥ २९ ॥

दत्ते माधवमासस्य तस्मिन्नेकदिनोद्भवे । सुकृते अन्तयो याम्ययातनापरिवर्जिताः ।
विमानवरमारूढाः सर्वे ते त्रिदिवं ययुः । प्रणमन्तः स्तुवन्तश्च पश्यन्तस्तं प्रहर्षिताः ।

नृपेण दत्तं तदवाप्य पुण्यं वैशाखमासैकदिनाभिजातम् ।
सर्वे ययुस्ते नरकाद्विमुक्ता दिवं विमानाधिगता हि चित्रम् ॥ ३० ॥
नूनं विचित्रो भुवि भूतवर्गः सम्भूतभावो बहुधा विचित्रः ।
तथा विचित्रोऽखिलकर्मयोगस्तत्कर्मशक्तिप्रचयो विचित्रः ॥ ३१ ॥
संस्तूयमानो मुनिदेवसङ्घैर्यस्तद्विशेषाधिकलब्धपुण्यः ।
परं पदं योगिवरैरलभ्यं ययौ जगन्नाथगणाभिवन्द्यः ॥ ३२ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमासमाहात्म्ये द्व्युत्तरशततमोऽध्याय

## त्र्यधिकशततमोऽध्यायः

विष्णुमूर्तिध्यानवर्णनपुरःसरं वैशाखमासमाहात्म्यसमाप्तिवर्णनम् ।

यम उवाच ।

एतन्माधवमासस्य समासात्किञ्चिदीरितम् । माहात्म्यं पूर्णिमायाश्च विशेषाद्विजसत्तम

वैशाखमासे मधुसूदनस्य प्रियं च यत्नं पठतीतिहासम् ।
स याति कृष्णालयमाशु पूतः कल्पाननेकानिह मोदते च ॥ २ ॥
धन्यं यशस्यमायुष्यमिदं स्वस्त्ययनं महत् ।
स्वर्ग्यं श्रीदं सौमनस्यं प्रशस्यमघमर्षणम् ॥ ३ ॥

इदं माधवमासस्य माहात्म्यं माधवप्रियम् । चरित्रं भूपतेस्तस्य संवादं द्विजयोरपि ॥
श्रुत्वा पठित्वा विधिवदनुमोद्य मनःप्रियम् । भवेद्भक्तिर्भगवति यया स्यात्पापसंक्षयः
अथ गच्छ महादेव ! देव लोकाद्यथेच्छया । निवास्य भुवि येदेहं दहन्त्याद्यापि बान्धवाः

विलप्यमानैरपि बन्धुभिस्तैर्न चापदृष्टं तव तच्छरीरम् ।
प्रक्षिप्यते हन्त जवेन तावद्याहि स्वयं सुप्त इव प्रबुद्धः ॥ ७ ॥
मम प्रसादादिह पुण्ययोगः श्रुतो यथावत्तमिमं विधेहि ।
विधानतो वै समये त्वमन्ते समागमोऽन्ते भविता सुरेश ॥ ८ ॥

सूत उवाच ।

इति देवपथः श्रुत्वा नत्वा धर्माधिपं ततः । पुनः पपात स द्रुढ परितुष्टमना द्विजः ॥
धर्मराजप्रसादेन तत्रस्थश्च महीतले । संसुप्त इव चोत्तस्थौ बन्धुवर्गसमन्वितः ॥१०॥
विधिमेनं द्विजो भूयो वर्षे वर्षे च स स्वयम् । चकार कारयामास माधवस्नापनव्रतम्
यमब्राह्मणसंवादो मयाऽयं च विकीर्तितः । अस्य माधवमासस्य पुण्यस्नानप्रसङ्गतः ॥

वैशाखमासे स्नान हरिप्रिये प्रातं विधाय ददाति भक्त्या ।
दानञ्च होमं सुतप तथा कुर्याद् दृष्टे परं तस्य न दुर्लभं वा ॥ १२ ॥

यः शृणोतीदमखिलेन माहात्म्यं विष्णुवल्लभम् । सर्वपापविनिर्मुक्तो याति विष्णोः परंपदम्

ऋषय ऊचुः ।

सूत सूत महाप्राज्ञ ! त्वयाऽतिकरुणात्मना । वैशाखमासमाहात्म्यं कीर्तितं पापनाशनम्
निशम्य मधुवन्मुग्धं माधवे कथितास्त्वया । पूजनं स्नानदानादि धर्मस्यार्थविधानतः
यथा च माधवो देव: प्रीतये पारवारतः । अधुना श्रोतुमिच्छामो ध्यानं तस्य महात्मनः
हृत्पद्मस्थ भक्तपूज्यस्य त्रिगुणस्य महात्मनः ॥ १८ ॥

मत्तभ्रमद्भ्रमरघुष्टविलम्बमानसन्तानकप्रसरदामपरिष्कृतांसम् ।
हारावलीमणिगणराजितपीवरोरस्व्योमस्थलीलसितकौस्तुभभानुमन्तम् ।
श्रीवत्सलक्षणसुलक्षितमुन्नतांसमाजानुपीनपरिवृत्तसुजातबाहुम् ।
आबन्धुरोदरमुदारगभीरनाभिं भृङ्गाङ्गनानिकरमञ्जुलरोमराजिम् ॥ ३२ ॥
नानामणिप्रघटिताङ्गदकङ्कणोर्मिग्रैवेयसारसननूपुरतुन्दबन्धम् ।
दिव्याङ्गरागपरिपिञ्जरिताङ्गयष्टिमापीतवस्त्रपरिवीतनितम्बबिम्बम् ॥ ३३ ॥
चारूरुजानुमनुवृत्तमनोज्ञजङ्घं कान्तोन्नतप्रपदनिन्दितकूर्मकान्तिम् ।
माणिक्यदर्पणलसन्नखराजराजद्रक्ताङ्गुलिच्छदनसुन्दरपादपद्मम् ॥ ३४ ॥
मत्स्याङ्कुशारिदरकेतुयवाब्जवज्रैः संलक्षितारुणकराङ्घ्रितलाभिरामम् ।
लावण्यसारसमुदायविनिर्मिताङ्गं सौन्दर्यनिन्दितमनोभवदेहकान्तिम् ॥
आस्यारविन्दपरिपूरितवेणुरन्ध्रलोलत्कराङ्गुलिसमीरितदिव्यरागैः ।
शश्वद्द्रवैः कृतनिविष्टसमस्तजन्तुसन्तानसन्ततिमनन्तसुखाम्बुराशिम् ॥
गोभिर्मुखाम्बुजविलीनविलोचनाभिरूधोभरस्खलितमन्थरमन्दगाभिः ।
दन्ताग्रदष्टपरिशिष्टतृणाङ्कुराभिरालम्बवालधिलताभिरथाभिवीतम् ॥ ३७ ॥
सप्रस्नुतस्तनविभूषणपूर्णनिश्चलास्यद्रुहृत्क्षरितफेनिलदुग्धमुग्धैः ।
वेणुप्रवर्तितमनोहरमन्दगीतदत्तोच्चकर्णयुगलैरपि तर्णकैश्च ॥ ३८ ॥
प्रत्यग्रशृङ्गमृदुमस्तकसम्प्रहारसंरम्भभावनविलोलखुराग्रपातैः ।
आमेदुरैर्बहुलसास्नगलैरुदग्रपुच्छैश्च वत्सतरवत्सतरीनिकायैः ॥ ३९ ॥
हम्भारवक्षुभितदिग्वलयैर्महद्भिरप्युक्षभिः पृथुककुद्भरभारखिन्नैः ।
उत्तम्भितश्रुतिपुटीपरिपीतवंशध्वानामृतोद्गतविकासिविशालघोणैः ॥
गोपैः समानगुणशीलवयोविलासवेशैश्च मूर्च्छितकलस्वनवेणुवाद्यैः ।
मन्द्रोच्चतारपटुगानपरैर्विलोलदोर्वल्लरीललितलास्यविधानदक्षैः ॥ ४१ ॥
जङ्घान्तपीवरकटीरतटीनिबद्धव्यालोलकिङ्किणिघटारणितैरटद्भिः ।
मुग्धैस्तरक्षुनखकल्पितकान्तभूषैरव्यक्तमञ्जुवचनैः पृथुकैः परीतम् ॥ ४२ ॥

अथ सुललितगोपसुन्दरीणां पृथुकबरीनितम्बमन्थराणाम् ।
गुरुकुचभरभङ्गुरावलग्नत्रिवलिविजृम्भितरोमराजिभाजाम् ॥ ४३ ॥
तदतिरुचिरचारुवेणुवाद्यामृतरसपल्लविताङ्गजाङ्घ्रिपस्य ।
मुकुलविमलरम्यरूढरोमोद्गमसमलङ्कृतगात्रवल्लरीणाम् ॥ ४४ ॥
तदतिरुचिरमन्दहासचन्द्रातपपरिजृम्भितरागवारिराशेः ।
तरलतरतरङ्गभङ्गविप्रुट्प्रकरघनश्रमबिन्दुसन्ततानाम् ॥ ४५ ॥
तदतिललितमन्दचिल्लिचापच्युतनिशितेक्षणमारबाणवृष्ट्या ।
दलितसकलमर्मविह्वलाङ्गप्रविसृतदुःसहवेपथुव्यथानाम् ॥ ४६ ॥
तदतिरुचिरवेषरूपशोभामृतरसपानविधानलालसानाम् ॥
प्रणयसलिलपूरवाहिनीनामलसविलोलविलोचनाम्बुजानाम् ॥ ४७ ॥
विस्रंसत्कबरीकलाप विगलत्फुल्लप्रसूनास्रव-
न्माध्वीलम्पटचञ्चरीकघटयासं सेवितानां मुहुः ॥
मारोन्मादमदस्खलन्मृदुगिरामालोलकाञ्च्युल्लस-
न्नीवीविश्लथमानचीनसिचयान्ताविर्नितम्बत्विषाम् ॥ ४८ ॥
स्खलितललितपादाम्भोजमन्दाभिघातक्वणितमणितुलाकोट्याकुलाशामुखाना
चलदधरदलानां कुड्मलत्पक्ष्मलाक्षिद्वयसरसिरुहाणामुल्लसत्कुण्डलाना
द्राघिष्ठश्वसनसमीरणाभितापप्रम्लानीभवदरुणोष्ठपल्लवानाम् ।
नानोपायनविलसत्कराम्बुजानामालीभिः सततनिषेवितं समन्तात् ॥५०॥
तासामायतलोलनीलनयनव्याकोशनीलाम्बुज-
स्रग्भिः सम्परिपूजिताखिलतनुं नानाविलासास्पदम् ।
तन्मुग्धाननपङ्कजप्रविगलन्माध्वीरसास्वादिनीं,
बिभ्राणं प्रणयान्मदालसमधुव्रतमालां मनोहारिणीम् ॥ ५१ ॥
गोपीगोपपशूनां बहिः स्मरेदग्रतोऽस्य गीर्वाणघटाम् ।
[illegible] ॥ ५२ ॥

तद्वद्दक्षिणतो मुनिनिकरं दृढधर्मवाञ्छया समाम्नायपरम् ५३ ॥
योगीन्द्रानथ पृष्ठे मुमुक्षमाणान्समाधिना ॥ सनकाद्यान् ॥ ५४ ॥
सव्ये सकान्तानथ यक्षसिद्धगन्धर्वविद्याधरचारणांश्च ।
सकिन्नरानप्सरसश्च मुख्याः कामार्थिनीर्नर्तनगीतवाद्यैः ॥ ५५ ॥
शङ्खेन्दुकुन्दधवलं सकलागमज्ञं सौदामिनीततिपिशङ्गजटाकलापम् ।
तत्पादपङ्कजगतामचलाञ्च भक्तिं वाञ्छन्तमुज्झितसमस्तससङ्गम् ॥
नानाविधिश्रुतिगुणान्वितसप्तरागग्रामत्रयीगतमनोहरमूर्छनाभिः ।
सम्प्रीणयन्तमुदिताभिरपि प्रभक्त्या सञ्चिन्तयन्नमसि मां द्रुहिणप्रसूतम् ॥
इति ध्यात्वाऽऽत्मानं पटुविशदधीर्नन्दतनयं,
नरो द्रुव्यैपाऽर्घ्यप्रभृतिभिरनिन्द्योपहृतिभिः ।
यजेद्भूयो भक्त्या स्ववपुषि बहिष्ठैश्च विभवैरिति प्रोक्तं सर्वं यदभिलषितं भूसुरवराः ॥
श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे वैशाखमाहात्म्ये त्र्युत्तरशततमोऽध्यायः
इति वैशाखमासमाहात्म्यं समाप्तम्

---

## चतुरधिकशततमोऽध्यायः

### अश्वमेधक्रतोरनन्तरं शम्भुब्राह्मणरूपेण शङ्करस्यायोध्यां प्रत्यागमनम् ।

ऋषय ऊचुः ।

भूयो वद महाभाग रामचारित्रमद्भुतम् । राममाहात्म्यसर्वस्वं भक्तानां प्रीतिदायकम्

सूत उवाच ।

अश्वमेधं क्रतुवरं इत्वा दाशरथिर्यदा । प्रवृत्तो लोककृत्येषु शास्त्रकृत्येषु कोविदः ॥
अयोध्यां गन्तुकामेन शङ्करेण महात्मना । पार्वत्यासह देवेन दर्शनं सरयूतटे ॥ २ ॥
मुनयस्तं समभ्येत्य शङ्करं विप्ररूपिणम् । कश्यपाद्या महात्मानःपप्रच्छुरमितौजस

स्वागतं ते मुनिश्रेष्ठ समार्यः कुत आगतः । किमागमनकृत्यं ते कं देशं गन्तुमुद्यतः ॥१

शङ्कर उवाच ।

अहं शम्भुरितिख्यातो विप्रो हिमगिरिस्थितः । द्रष्टुं च राघवं गच्छे ममकार्यं महत्ततः
मामाह्वयति राजाऽसौ पुराणश्रवणेरतः । आगच्छन्तु भवन्तोऽपि राघवः परितुष्यति ॥
ततस्ते मुनयः शम्भुर्ययू रामदिदृक्षया । तानागतान्वसिष्ठस्तु ज्ञात्वा रामाय चोक्तवान्
ततः सत्वरमुत्थाय निर्ययौ स पुरोहितः । अर्घ्यपाद्यादिकैस्सर्वान्पूजयामास तान्नृपान्
गृहराजं ततः सर्वान्प्रावेशयदरिन्दमः । प्रत्येकमासनं दत्वा स्वागतोक्तयाऽऽसनस्थितान्
क्रमेण रघुशार्दूलः पूजयामास तान्नृपान् । वाचा मधुरया प्रीणन्निदमाहासनस्थितान् ॥

श्रीराम उवाच ।

अद्य मे सफलं जन्म प्राप्तमद्य तपःफलम् । अद्याभ्यासस्य विद्यानां फलकालोऽयमागतः
अद्य मे पितरस्तुष्टा राज्यं च सफलं मम । अद्य मे सफलं वृत्तमद्य मे सफलं श्रुतम् ॥
एवं वदन्तं राजानं ब्राह्मणाः कश्यपादयः । ऊचुः प्रियतरं वाक्यं रामं राजीवलोचनम् ॥

ऋषयः ऊचुः ।

अयं शम्भुर्द्विजः प्राप्तः सर्वशास्त्रविशारदः । वेदवेदाङ्गतत्त्वज्ञः सर्वभूतहिते रतः ॥ १५ ॥
कैलासवासी सततं तपसे कृतनिश्चयः । ब्रह्मणा ब्रह्मवर्चस्के तुल्यो ब्रह्मविदांवरः ॥१६॥
हरिणा ब्रह्मवात्सल्ये प्रसादे शङ्करोपमः । एवंविधो महातेजाः शम्भुर्ब्राह्मणपुङ्गवः ॥१७॥
अष्टादशपुराणज्ञो मीमांसान्यायकोविदः । त्वद्भाग्यगौरवादेव प्राप्तोऽयं मुनिसत्तमः ॥
त्वयाऽऽहूतो मुनिवर कैलासादागतः प्रभो । अतः पृच्छ महाभाग पुराणाख्यानमुत्तमम् ॥
श्रोतुकामा वयं प्राप्तास्त्वामद्य रघुनन्दन । अन्तंगतस्य वेदानां सर्वशास्त्रार्थवेदिनः ॥
पुंसोऽश्रुतपुराणस्य न सम्यग्याति दर्शनम् ॥ २१ ॥

सूत उवाच ।

एवमुक्तो रघुश्रेष्ठो मुनिभिस्तत्त्वदर्शिभिः । प्रहर्षमतुलं लेभे पुराणश्रवणोत्सुकः ॥२२॥

श्रीराम उवाच ।

...च लिङ्गमाहात्म्यमेव च । महेशनाममाहात्म्यं पूजामाहात्म्यमेव च ॥

नमस्कारस्य माहात्म्यं दृष्टिमाहात्म्यमेव च । जलदानस्य माहात्म्यं धूपदानस्य सत्तम !
दीपगन्धादि दानस्य पुण्यमाहात्म्यमेव च ।
नानाख्यानेतिहासानां कथां पापप्रणाशिनीम् ॥ २५ ॥
धर्मार्थकाममोक्षांश्च तदुपायांश्च सुव्रत । तत्सर्वं श्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥

शम्भुरुवाच ।

रामराम महाबाहो पुण्यवानसि राघव । राज्यासक्तस्य ते जाता पुराणश्रवणे रतिः ॥
रुद्राक्षहरसेवया राम पुण्यतीर्थनिषेवणात् । साजिह्वा या शिवंगायेत्तच्चित्तंयत्तदर्पितम्
तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ । भुजङ्गदेहमस्थथं तदेवाशेषजन्मसु ॥
यद्देवोत्पुलको भासि हरनामानुकीर्तनात् । कृतार्थोऽसि महाराज तत्प्रश्नानुगता मतिः
अनन्तरं समाजग्मुर्लाङ्कीकाःसत्यपरश्रमाः । तत्करात्पत्रिकां गृह्य पपाठ रघुसत्तमः ॥
मनसाऽचिन्तयद्रामःकथमेतदभूदिति । रामं शम्भुस्तदा प्राह देव्या ब्राह्मणवेषवान् ॥

शम्भुरुवाच ।

किं चिन्तयसि काकुत्स्थ ! मुनिष्वग्रे वसत्स्वपि ।
तद्वाक्यं राघवः श्रुत्वा पप्रच्छ मुनिपुङ्गवान् ॥ ३३ ॥

श्रीराम उवाच ।

विभीषणःकथमसौबद्धःशृङ्खलया नृभिः । मत्स्थापिते शिवलिङ्गंदृष्ट्वारामेश्वरं स्वहो
द्राविडैःकुटिलैर्दुष्टैरात्मनातद्विचार्यताम् । विचार्य मुनिवर्यास्ते नेशास्तज्ज्ञातुमल्पशः
न जानीम इति प्राहु रामं रामस्तदाऽब्रवीत् । पुराणे वीक्ष्यविधिनातत्सर्वं मुनसत्तमाः
भवद्भ्यानहेतुश्च विचार्यस्तदनन्तरम् । किं किं पुराणं प्रेक्ष्यं स्याद्गुरुर्नीयं तथैव किम्
'प्रशस्तःकीदृश.श्लोकस्तदन्यःकीदृशो भवेत् । कीदृशेषु च कार्येषु कीदृशाःपूजकास्तथा
पूजा च कीदृशैर्भक्तैः कार्या निर्णयदर्शने । इति रामस्य वचनं श्रुत्वा ते द्विजसत्तमाः ॥
प्रत्यूचुस्तं रघुश्रेष्ठं चिन्ता व्याकुलमानसम् ।
न चकारो वयं राम ! वीक्ष्यतां तु पुराणवित् ॥ ४० ॥
तच्छ्रुत्वा राघवःशम्भुं पप्रच्छचिन्तयान्वितः । सोऽपितद्वाक्यमाकर्ण्यप्रत्युवाचमहामतिः

शम्भुध्यानम् ।

पुराणमीर्षां पूजाहं स्वसाम्नाऽन्यमतः शुचिः । श्रीमीमांसाद्यविज्ञानश्रोत्रियोऽनसूयकः
देवेषु च सत्कर्मेषु सम्यग्बुद्धिर्विशेषतः । सत्कर्मप्रियवादी च शास्त्रिकशास्त्रिनायकः ॥५२
यजुर्वेदी विशेषेण पूजकेन्दुर्जनकः सुधीः । पौराणलक्षलिखितं देवलिप्यन्वितं शुभम्
पञ्चायतनिवासी सद्गुणगणसंपन्नाम् । प्रागुक्तं देवयोःप्राप्तं प्रणयस्याप्रयोजिका ।
देवालये देवपीठिका प्रकारलक्षण्य पाश्वंतः । शिरोमात्रमुखस्य सकोणायःप्रलम्बिनी ।
आकारःस हि विशेष.पद्विकारसरोरुहया ! पार्श्वं पद्मपत्रबिन्दुमात्रविकार इति कीर्तितः ।
तस्य पादशिरोरेखा लक्षिण्या ई उदाहृतः । सर्वांशादे शिरोरेखा अथवा प्रणयंविना ।
तस्यां तु लम्बरेखाभ्यां लक्षणे च लघित्रयन् । उकारःसहि विश्यातो लघित्रयतस्तु
एवमन्यानि सर्वाणि अक्षराण्याह भारती । लिप्याऽनयैव लिखितं पुराणं तु प्रशस्यते
ब्राह्मं पाद्मं वैष्णवं च मार्तण्डं नारदेरितम् । मार्कण्डेयमथाग्नेयं कौर्मं वामनमेव च ।
गारुडं लैङ्गमाख्यातं स्कान्दं मात्स्यं नृसिंहकम् । तथैवगदितं साम्बपुराणं कपिलं तथा
वाराहं ब्रह्मवैवर्तं शङ्कुमेषु प्रशस्यते । शैवं भागवतं दौर्गं भविष्योत्तरमेव च ॥ ५३ ॥

भविष्यं चोपसंज्ञानि त्वन्यानि च विवर्जयेत् ।
विमुच्य पुस्तकं रत्नपीठे निक्षिप्य संस्कृतम् ॥ ५४ ॥

धौतवस्त्रधर.स्नात्वाशुचिराक्रोधनोऽध्वरः । आदायास्मानमभ्यर्च्यं हृत्वासद्भुतमेव च

अङ्कुशं चाक्षसूत्रं च पाशं पुस्तकमेव च ।
धारयन्तीं सितां ध्यायेत्प्रसन्नास्यां सरस्वतीम् ॥ ५६ ॥

गोक्षीरसदृशाकारं त्रिनेत्रं वृषवाहनम् । सहासवदनं शान्तं शुक्लाम्बरधरं शिवम् ॥५७॥

हरिणं चाभयं चोद्र्ध्ववाहुयुग्मं किरीटिनम् ।
व्याख्यामुद्रां च दक्षेऽधो वामहस्ते वरप्रदम् ॥ ५८ ॥

नानारत्नविभूषाढ्यं गिरिजाद्धांम्बुजासनम् । यद्वुभिर्मुनिमुख्यैस्तु ध्यायमानपदाम्बुजम्
मूर्तिमद्भिस्तथा वेदैः स्तूयमानं पुराणकैः । अन्यैः समस्तलोकैश्च संसेवितपदाम्बुजम्

ध्यात्वैव पूजकः सम्यगादौ पूजां समारभेत् ।

आपो वा इदमित्येतत्कलशस्याभिमन्त्रणम् ॥ ६१ ॥

तज्जलं च गृहीत्वा च पात्रस्थमभिमन्त्रयेत् । तत्सद्ब्रह्मेति मन्त्रेण प्रशस्य प्रणवेन तु
आत्मानं सर्वपात्राणि तत आवाहयेदिति । यद्वाणिनित्यृचेनैव भारती षोडशार्चनम् ॥

पुरुषसूक्तेन वा कुर्याद्गायत्र्या वा समर्चयेत् ।

ओंनमो भगवते अमुक पुराणायेति पुराणमर्चयेत् ॥ ६४ ॥

काण्डात्काण्डेति हि मन्त्रेण दूर्वामानीय पूजयेत् । ओं नमो भगवत्यै दूर्वायै इति ॥६५॥
सलोकपालपूजा स्यादथ कन्यासमर्चनम् । वत्सरात्पञ्चकादूर्ध्वं दशवर्षादधः शुभाः ॥
अनुत्पन्नरजस्तुर्वाऽपि तां प्रयत्नेन पूजयेत् । गन्धपुष्पाक्षतैर्धूपैर्दीपताम्बूलभूषणैः ॥६७॥

पाठयेदप्यमुं मन्त्रं पूजकः कन्यकामिमाम् ॥ ६८ ॥

सत्यं ब्रूहि प्रियं ब्रूहि भगवति सरस्वति नमस्ते नमस्त इति ॥ ६९ ॥

गायत्र्यानुक्रमात्यास्तु दूर्वायुग्मं तु कारयेत् । सन्निधौ पुस्तकस्याथः सहस्रपरमेष्ठिना ॥
दूर्वायुग्मत्रयं दद्यात्तस्या हस्ते विचक्षणः । साऽपि क्षिपेत्पुस्तकस्यौ शलाका त्रपमन्यतु
विसृज्यतां पुनर्दद्याच्छिवाभ्यां नमस्त्वथ । पत्रयोर्मध्यमःश्लोकः कार्यसिद्धेर्हि सूचकः

पूर्वपत्रे समाप्तिः स्याच्छ्लोकस्य यदि राघव! ।

परपत्रे पठेच्छ्लोकं विविच्यार्थमुदीरयेत् ॥ ७३ ॥

शनैः शनैः पठेत्माज्ञो व्याख्यास्येच्च शनैः शनैः ।

त्वरेह नहि कर्तव्या कुप्यति त्वरया तु गीः ॥ ७४ ॥

घटिकायास्तुपादःस्यात्स्याततोऽधिका । त्वरयेन्नचपकारं सतंस्यासमनुह्निजम्
विविच्य पाठं श्लोकस्यनिश्चित्यार्थं च भाषसे । प्रतीपं तत्तयकव्यंविविच्य रघुनन्दन
यदि शुभमशुभं वा श्लोकमग्र्यं पठेद्सौ । पुस्तकस्थं च हिरण्येव पूजकः स द्विजो यदि
तत्तथैव हि विशेयं विसंवादो न शस्यते । दैवागतो हि स श्लोको दैवं हि बलवत्तरम्
उपश्रुतिषु यद्वच्च नापराधो द्विजस्य [illegible] । विस्मयोन च कर्तव्यो दैवस्य कुटिलागतिः
पत्तस्यद्विपर्यासे पत्रे चोपरि वार्तिणि । समादेशं तिरस्कृत्य द्वितीयं [illegible] पठेदतः ॥
ततस्तृतीयपाठस्यात्ततःकार्यविवेचनम् । अविसर्गान्तपूर्वास्ते पदर्यस्तरपञ्चमाः ॥८१॥

स्तुतिलिङ्गवर्जितः श्लोकःशकुनेषुप्रशस्यते । अध्यायादिः समाप्तिश्च वृथापत्रं वृथालिपिः
उक्तानुवचनं चैव ह्यप्रस्तुतमथैव च । दग्धपत्रं नष्टलिपिः सन्दिग्धाक्षरमेव च ॥ ८३ ॥
एतानि शकुने नित्यं वर्जनीयानि पण्डितैः । प्रश्नो हि द्विविधो ज्ञेयो दीप्तशान्तप्रभेदतः
शान्तं च द्विविधं ज्ञेयमुत्पत्तिस्थितिवृद्धितः । तत्र शान्तंप्रशस्तं स्याल्लक्षितंपूर्वलक्षणैः

कार्यभेदास्तु वर्ण्यन्ते केचिन्मर्त्योपयोगिनः ।
कस्यचित्कार्यमादाय कश्चित्प्रष्टा भवत्यपि ॥ ८६ ॥

स करोति तदा प्रश्नं समेत्य स्मरतेऽत्र किम् । स पुनर्धार्यपत्रं तत्तस्मिन्पत्रं प्रशस्यते
अथवा तत्क्षमोपेतं वैराग्यं परमेव च । यतः कुतश्चिद्दुष्टस्तु स्तुतिपादकमेव च ॥८८॥
परिहृत्य परं चापि तस्मिन्नर्थे शुभावहम् । मृतो गृह्णाति वागर्थमिति प्रश्नोऽशुभप्रदः
विवादे विजयप्रश्ने जयद्योतकमिष्यते । स्तुतिरप्यत्र शस्ता स्यात्क्रूरायां क्लेशभोजयः
प्रशान्तायामुपायैस्तु मिश्रायां विड्वरो भवेत् । पुरादिवर्णने यत्तु मध्यमं यद्विवोत्तमम्
कलिसम्भावनायास्तु शृङ्गारस्योपवर्णने । राज्यनिर्वाहचिन्तायां राज्यलिङ्गं शुभावहम्
यस्यापि यादृशं योग्यं विचार्यंतादृशं बुधैः । स्तुतिवैराग्ययोःकार्यंविलयः परिकीर्तितः

कार्याल्पसिद्धिः स्खलिते न च निर्वाहमृच्छति ।
तस्यान्यार्थस्यान्यभावो राम ! शान्तिविचारणे ॥ ९४ ॥

विसर्गान्तश्च पूर्वार्द्धविपर्यासौ भविष्यतः । सङ्कल्पितान्यथाभावो ह्यध्यायस्यसमापने
काण्डादेन्तु समाप्तौ तु स्यात्तत्कार्यविनाशनम् । तस्मादेतादृशेदोषे शकुनस्यविपर्ययः
श्रुने पुस्तकपाते च व्याहते मस्तकादिषु । वक्ता वैमानसं याति ततः शकुननाशनम् ।
तस्मादेतादृशे दोषे शकुनं परिवर्जयेत् । उपमायां भवेद्राम कार्याभासो न वस्तुतः ।
सन्तानं भोऽन्यत्र वोक्तास्तुतिर्मध्यमःस्यदा । स्तुतिःप्रशस्ताकुत्रापि गुणवत्कार्यनिर्णये
विवाहे वादे दानेव्यवहारेकृषौ तथा । यथार्थां च स्तुतौ राम निर्वाहेऽपि न दूषणम्
अयथार्थां स्तुतिर्यां हि तत्र कार्यं न सिध्यति । अनुक्तार्थे तथा पद्ये पुराणादिष्वनादृते
पलायने देशमार्गे व्याधिसम्भव एव च । चौरादिभिभये तस्मिन्घोरकार्यविनाशनम् ।
शान्तः स्यादपि च प्रश्न इति प्राहुः पुराविदः ॥ १०२ ॥

राम उवाच।

कथं पद्यं पुराणज्ञो वदिष्यति। अनुक्तो न श्रुतः सम्यक्श्रोतॄणामितिनिश्चयः
तां मह्यमर्थश्चापि विचार्यताम्। मायाबोधकमप्यत्र वक्तुमर्हसि पण्डित ! ॥

शम्भुरुवाच।

मधून्यत्र मधुर्मधुभुजं मधुः। मधुनामधुनादर्थविषाणि च विशाणि च ॥
भ्युदार्थस्त्वयं श्लोकः शकुनेन हि शस्यते ॥१०६॥
से रोरी रीरीरारंररीररम्। एवं करोति शुद्धात्मा ब्राह्मणो ब्रह्मतोऽमिधिः ॥
स्त्वयं श्लोकः शकुनेन प्रशस्यते। एवमादीनि पद्यानि पुराणेषु रघूत्तम ! ॥
ं न च व्याख्यातस्पाठस्तु परं भवेत्। वक्तुः श्रोतुरवैगुण्यं व्रतेषु नियमेषु च
पुराणानि न विस्त्यातिकथन्विति। निरुक्तादिवशादर्थधीरप्यस्तु विचारतः
प्रक्रियांचैव विचार्यपरमार्थतः। यत्स्वांस्तत्रहि श्लोकःप्रक्रिया तु ततोलघुः
पृथायासे पृथपने विनाशनम्। स्थादन्तरितनिर्वाहपत्रे कार्यविसूत्रता ॥
पयः प्रोक्तः प्रमादलिपिके तथा। पृथ्वासारे पृथायासः पुनरुक्ते विसंविदे ॥
तत्कार्यसिध्यतिवा न सिध्यति। विलम्बेनाथ वा सिद्धिरस्पष्टाक्षरके पुनः
माप्नोति निर्दिष्टदिवसेष्वपि। न मत्यहं निरीक्षेत पुराणशकुनं नृपः ॥११५
पुनस्योतिष्ठंस्तथा नैव निरीक्षेत पुराणकम्।
दिवस्य दिवसस्याथ रात्रौ पूजां विधाय च ॥ ११६ ॥
परैरुध्वं शकुने रघुनन्दन। पश्चान्निरीक्षणं कार्यं सद्यःकालप्रयावधि ॥११७
ीरेण विशेषं शकुनं वदेत्। शुभकार्येषु सर्वेषु प्रेतश्राद्धादिवर्जनम् ॥११८
शापोदेशानां च विपर्ययः। रक्षसां दुष्टसत्वानां शुद्धं प्राणिविहिंसनम् ॥
र्माणं द्दीपनं वमनं स्त्रीः। हासो बीभत्सता दुःस्वदुःस्वप्नप्रमपापकाः ॥
पीडा कलहो मरणं तथा। क्रूराणामागमश्चापि महतां भयमेव च ॥१२१॥
थमाद्यास्तथा चान्याः प्रक्रियास्तु विवर्जयेत्।
यः प्राप्तिविचारे च राजसृष्टिः सुखावहा ॥१२२॥

ग्रहणामुदयो रोगशान्तिरप्यत्र शस्यते । किमत्र बहुनोक्तेन तत्तद्योगं विचारयेत् ॥१२१
सर्वेषु च पुराणेषु स्कान्दमत्र प्रशस्यते । वैष्णवं केचिदिच्छन्ति रामायणमथापरे ॥१२४
सत्यादिसर्वदोषाणां वैष्णवे नैव दोषता । स्कान्दे रामायणे चैवदोषत्वमपि वाल्मी
किं तु पूजयितुं शक्यं वैष्णवं नैव केनचित् । सदाचारविहीनेन पूजितं यदि चेद्भवेत्
तदा शुभमिवायाति शकुनं नैव सिध्यति । सर्वाचारसमोपेते शाखाबन्धे यथा घृत ।

सूत उवाच ।

इत्थं शम्भुद्विजेनाथ बोधितो राघवस्तदा । विभीषणपरीक्षायां शकुनायोपचक्रमे ।
वसिष्ठं सर्वतत्त्वज्ञं पुराणेषु विशारदम् । बभाषे राघवो वाक्यं पुराणं वीक्ष्यतामिति
वसिष्ठोऽप्याह रामं तं मुनेश्च मुख्यसन्निधौ । वक्तुं निरीक्षितुं राम न शक्तिर्मम विद्यते
शम्भुं प्राह ततो रामो मुनिसम्प्रेक्षिताननम् ।
भवन्तोऽपि हि तत्त्वज्ञाः पुराणेषु विशारदाः ॥ १३१ ॥
सद्यस्तु पुराणस्थंशकुनं मम कार्यतः । तथेति शम्भुरुक्त्वा तु शुचिर्भूत्वाऽर्चयोऽभवत्
स्कान्दमभ्यर्च्य विधिवत्प्रश्नं दृत्येति तत्त्वतः ।
स किं शृङ्खलया बद्धो मम भक्तो विभीषणः ॥ १३३ ॥
शर्मा दृष्टास्तदा श्लोकास्त्रय आदेशकास्त्रिधा ॥१३४॥
बद्ध्वा समुद्रं स तु राघवेन्द्रो ददौ पुरीं रक्षणदायरेन्द्रान् ।
योद्धुं विनिर्गत्य समाययुस्ते लङ्कापुरव्याप्यतिकायमुख्याः ॥१३५॥
महाबला अनघाः शिवभक्ता द्विजातयः । प्रमदाः केशाङ्गुलिन्यो भविष्यन्ति कलौ युगे ।
एवं स्तुतो महेशस्तु देवताः प्राहये शिवः । मोक्षयिष्यं भयमन्यामंहासुरभिरोधिना
श्लोकत्रयं निरीक्ष्याथ बन्धनिश्चयमुक्तवान् । मोक्षनंत्वरया राम भविष्यति न संशय
इति श्रुत्वामुनेर्वाक्यं रामः स मुनिवाक्यतः । कर्तुं विनिर्णयौ श्रीघ्रं विभीषणगवेषणम् ।
श्रीरङ्गनामनगरं त्वरया प्रविवेश ह । रामं तं पूजयामासुः पार्थिवानन्त स्थिताः ।
पूजिमन्नानुपाचाय क स्थितोऽसौ विभीषणः ।
देव ! श्रीराम ! न वयं जानीमस्तु कथामिमाम् ॥१४६॥

षेदयामास काकुत्स्थो वानरान्सर्वतो दिशः । ततो गत्वा कपिवरा दृष्टवन्तो नचैवतम्
थ रामो मुनिं प्राह शम्भुंपश्याद्वदस्व मे । तथेति रामसहितो मुनिः शम्भुद्विजान्वितः
शेयेति तथैवेति विप्रघोषं जगाम सः । पृष्टास्तेऽपि द्विजास्तत्र दर्शयामासुरर्चिताः ॥
न्तर्भूमिगृहे बद्धं राक्षसं बहुशृङ्खलैः । अथाह राघवो विप्राः किमनेन कृतं त्विति ॥
हक्तं ब्रह्महत्येति वृद्धो ब्राह्मणसत्तमः । द्विजोऽतिधार्मिकः कश्चिदेकान्ते प्रयया कृशः

ध्यानायोपवने तस्थौ तत्र गत्वा विभीषणः ।
पादेनाधर्षयद्विप्रं स विप्रोऽप्यतिचूर्णितः ॥ १४७ ॥

रद्सैकमतो गन्तुं न शशाक विभीषणः । अस्माभिस्ताडितो दुष्टो न ममार वधैरपि ॥
मतो राम ! निहत्यैनं पापात्मानं सुखीभव । रामः संशयमापन्नो विप्रानिदमुवाचह ॥
र्द ममैवमरणं मद्भक्तो हन्यते कथम् । राज्यमायुर्मया दत्तंतथैव स भविष्यति ॥१५०
भृत्यापराधे सर्वत्र स्वामिनोदण्डइष्यते । रामवाक्यं द्विजाःश्रुत्वा विस्मयाविदमब्रुवन्

द्विजा ऊचुः ।

न पद्मयबमरणं श्रीराम मुनिसंमतम् । वसिष्ठादिमुनीन्द्रैस्तु विचारं कुरु यद्धितम् ॥
रामपृष्टा मुनिवराः प्रायश्चित्तमथोचिरे । अज्ञातब्रह्महत्या तु प्रायश्चित्तैरपोह्यते ॥१५३॥
मयमज्ञानतो हत्या प्रायश्चित्तमपेक्षते । गवां च त्रिशतं षष्टिं दद्यात्तु [illegible] विभीषणः॥१५४

प्रत्येकाश्चापि ते विप्रास्तथेत्यूचुः परस्परम् ।
मोचयिष्यामस्तद्दक्षः प्रायश्चित्तं करोतु सः ॥ १५५ ॥

विमुच्य राक्षसं विप्रा राघवाय न्यवेदयन् । रामोऽपि नाभिमायेत्तं प्रास्तिकमभाषत
ज्ञात्वा पृष्ट्वामुनीन्वृद्धान्प्रायश्चित्तमतः परम् । द्विजानुमतितःपापीमामुपैस्तु राक्षसः
श्रुत्वेति राघववचो राक्षसः पापसंयुतः । प्रायश्चित्तमृषिप्रोक्तं कृत्वा राममयाभ्यगात्
प्रायश्चित्तविशुद्धात्मा ननाम रघुनन्दनम् । रामस्तं प्रहसन्वाक्यमिदमाह सभान्तरे ॥

श्रीराम उवाच ।

अद्य प्रभृति पौलस्त्यविमृश्य कुरु यद्धितम् । अस्माकं स्वत्कृतेऽस्तःप्रयासोऽयमभूयतः
कृपालुर्भव सर्वत्र भृत्यो मम यतो भवान् । अथ ते मुनयः सर्वे निश्चितार्थं रघूत्तमे ॥

शम्भुरुवाच ।

या यथा प्राप्ता यथैते नृपस्तथा । सर्वांशो नृपतिश्चायं रामचन्द्रः प्रतापवान् ॥
देवीक्षितुं पत्नीं तव केशवकाङ्क्षति । नारायणस्तथेत्युक्त्वा प्रविशेत्याह राघवम्

अथ प्रविश्य भवनं लक्ष्मीं वीक्ष्य नमस्य च ।
विनयावनतो भूत्वा वाचमाह सुचारिणीम्
कृतार्थोऽस्मि ॥ सन्देहो वद त्वं किं तु मन्यसे ॥ ५५ ॥

श्रीदेव्युवाच ।

विकामरूपश्च कृपावानसि राघव । सीता सा चारुसर्वाङ्गी तव पत्नी तथा भवान्
ऽस्ति पुरा चासीद्दतीव विरहाकुलः । ममापि वद सर्वं तदपया न वलप्स्यसि

सहासान्यथ वाक्यानि सूनां चित्तहराणि च ।
श्रुत्वा तु तानि सर्वाणि रामभद्रो यतात्मवान् ॥ ५८ ॥

तुं काङ्क्षते तव ज्ञानकतत्सुखाम्बुजम् । स्मरपाणेन वचेन सम्पीड्य रघुद्वेसरम्
व निर्ययौ देवी पद्मा पद्मवनप्रिया । एकपत्नीव्रतं ज्ञात्वा रामं ते समुपागमन् ॥
र्वितसर्वाङ्गं स्थलत्परगति नृपम् । शिवनारायणौ दृष्ट्वा विस्मयं परमं गतौ
स्य प्रतिमाचित्ते भाविनोऽप्यवशात्मनः । धैर्यं पश्येदनिधनं तेन रामः सुकीर्तिमान्
:शिवमेवास्य नाशितं विद्यते क्वचित् । अथ रामोऽवदत्प्राह गच्छेऽहमगमत्प्रभो ! ॥
ततोऽथ हरिणा पुष्पकेण स राघवः । स मुनिःसहरामश्च सहनारायणौ ययौ ॥
लोकं गतः शीघ्रं ततः स्यात्पूर्वनिगतः । ततो द्वीपसमुद्रांश्च जम्बूद्वीपं पुनर्गतः ॥
आश्रमपदे तस्थिवान्सौ तपोनिधे । अथ स्नात्वा महानद्यां भरद्वाजो मुनीश्वरः ॥
ः धीमान्वसिष्ठः पुष्करे दृष्टवान्मुनिः । तत्र रामं महाबाहुं शिवनारायणपूर्वजान्
स्तूजयित्वा तु तानुवाच महामुनिः । ममाश्रमपदे यूयं भोक्तुमर्हथ सत्तमाः ॥
तु मुनिवाक्येन तथेत्याह कथञ्चन । अथ स्नात्वा महानद्यां हत्यादेवादि तर्पणम्

भोक्तुकामं तदा रामं वसिष्ठो वाक्यमुक्तवान् ।
धर्मस्थानं भवेद्यान न भावं क्रियते यदि ॥ ६० ॥

इति चिन्ताकुलेष्वेव सर्वेषु मुनिष्वथ ॥ २३ ॥

शम्भुराह शृणुष्वाथ राघवैतद्वदामि ते । प्रकल्पिता मया माया त्वत्कृतेनैतदद्भुतम्
नारायणीयमेतत्तु परमंधाम भास्वरम् । उष्णशीतादिविच्छेदं ज्ञानगम्यं न चाक्षुषम्
तत्तु पूजयतश्चोर्ध्वं पश्य ब्रह्मपुरोगमान् । दिक्षु सर्वासु च मुनीन्पश्य पूजयतोऽमल

चतुरो निगमान्पश्य स्तुवतः परमं पदम् ।

योगिनः सनकाद्यास्तु योगमास्थाय यत्नतः ॥ २४ ॥

ध्यायन्ति परमं तेजस्तदिदं पश्य राघव ! । अमुं च रोमशं पश्य प्रदक्षिणनमस्क्रियाः

कुर्वाणं कोटिकोटिश्च वालखिल्यान्मुनीश्वरान् ।

लक्ष्म्यादि सर्ववनितापूज्यमानं परं पदम् ॥ २६ ॥

साकारं च निराकारं ब्रह्मयत्परिकीर्तितम् । अज्ञानिनो न पश्यन्तिपश्यन्ति ज्ञानचक्षु
शम्भुवाक्यादतः सर्वे पूजयामासुरच्युतम् । गिरिकर्णी च तुलसीं मल्लिकां मारुतं तथा
नीलोत्पलैस्सुगंधैश्च कृष्णास्फुटजलैरपि । पूजयन्तो महात्मानो महात्मानं जनार्दनम् ।
नारदं चेऽथ दृष्टुर्जटिलं सपिपङ्गिकम् । नारायणपदाग्रेऽर्थं लब्धकुर्वीयवीतिनम् ।
स चापि मनसा दध्यौ क एष इति नारदः । स पपात प्रभोः पादे शम्भोरानन्दनिर्भर

शैवीं पञ्चाक्षरीं विद्यां जजाप मनसा मुनिः ।

धन्योऽस्म्यनुगृहीतोऽस्मि जन्माद्य सफलं मम ॥ ३५ ॥

ब्रह्मादिधन्यं चागम्यं ज्ञातवानस्मि ते पदम् । नारदं समथ प्राह शम्भुमैवं वदेति हि ।
यथा च मां न जानन्ति तथा मे कुरु वर्तनम् । गच्छ शीघ्रंहरिं ब्रूहि ममागमनमत्र ।
अथ स त्वरया गत्वा सर्वं व्यज्ञापयद्धरिम् । अथ स त्वरया विष्णुरादायार्घ्यादिकंशुभम्
कमलासहितो योगिकोटिकोटिसमावृतः । निर्ययौ नारदं हस्ते गृहीत्वा गरुडध्वज

नमो नमो नमोऽस्त्वस्मै शङ्करायेत्युदीरयन् ।

अर्घ्यपाद्यादिना सर्वान्पूजयामास केशवः ॥ ४० ॥

शुभम् । गृहराज्ञे ततः स्थित्वा नारायण उवाच ह ।

कोऽयं राजा महायशाः । समानुष्यवेषोऽयं ब्रह्माद्यैरप्यगोचरः ।

शम्भुरुवाच ।

मुनिवेषा यथा प्राप्ता वयमेते नृपस्तथा । तवांशो नृपतिश्चायं रामचन्द्रः प्रतापवान् ॥
एनां संवीक्षितुं पत्नीं तव केशवकाङ्क्षति । नारायणस्तथेत्युक्त्वा प्रविशेत्याह राघवम्

अथ प्रविश्य भवनं लक्ष्मीं वीक्ष्य नमस्य च ।
विनयावनतो भूत्वा वाचमाह सुचारिणीम्
कृतार्थोऽस्मि न सन्देहो वद त्वं किं नु मन्यसे ॥ ५७ ॥

श्रीदेव्युवाच ।

त्वं सुधाकामरूपश्च रूपवानसि राघव । सीता सा चारुसर्वाङ्गी तव पत्नी तथा भवान्
वियुक्तोऽसि पुरा ह्यासीद्धतीव विरहाकुलः । ममापि वद सत्यं त्वद्वचसा न चलिष्यसि

सहासान्यथ वाक्यानि यूनां चित्तहराणि च ।
श्रुत्वा तु तानि सर्वाणि रामभद्रो यतात्मवान् ॥ ५८ ॥

निर्गन्तुं काङ्क्षते तत्र आनम्रवदनमुखाम्बुजम् । स्मरवाणेन वक्रेण सम्पीड्य रघुद्वहम्
अन्वेव निर्ययौ देवी पद्मा पद्मवनप्रिया । एकपत्नीव्रतं ज्ञात्वा रामं ते समुपागमन् ॥
अथ वेपितसर्वाङ्गं स्खलत्पदगतिं नृपम् । शिवनारायणौ दृष्ट्वा विस्मयं परमं गतौ
महोऽस्य द्रढिमा चित्ते मायिनोऽप्यवशात्मनः । धैर्यं पश्येदनियतं तेन रामः सुकीर्तिमान्
सर्वतः शिवमेवास्य नाशिवं विद्यते क्वचित् । अथ रामो वचः प्राह गच्छेऽहं मम प्रभो ! ॥
अनुज्ञातोऽथ हरिणा पुष्पकेण स राघवः । स मुनिः सहरामश्च सदनारायणो ययौ ॥
लोकालोकं गतः शीघ्रं ततः स्वादूदधिं गतः । ततो द्वीपसमुद्रांश्च जम्बूद्वीपं पुनर्गतः ॥
भरद्वाजाश्रमपदे तस्थिवान्गौतमीतटे । अथ स्नात्वा महानद्यां भरद्वाजो मुनीश्वरः ॥
शिष्यैः धीमान्परिवृतः पुष्पकं दृष्ट्वान्मुनिः । तत्र रामं महाबाहुं शिवनारायणावपि
यथावत्पूजयित्वा तु तानुवाच महामुनिः । ममाश्रमपदे यूयं भोक्तुमर्हथ सत्तमाः ॥
रामस्तु मुनिवाक्येन तथेत्याह कथञ्चन । अथ स्नात्वा महानद्यां कृत्यादेवादि तर्पणम्

भोक्तुकामं तदा रामं वसिष्ठो वाक्यमुक्तवान् ।
धर्मत्यागो भवेद्राम न श्राद्धं क्रियते यदि ॥ ६० ॥

अमायां ग्रहणे तीर्थे व्यतीपातेऽथ संक्रमे । व्यतीतं यद्दिनेष्वाद्धं भगवन्क्रियते पुनः ॥
नित्यश्राद्धं पुनर्नैव कुर्यादिति वचनात्तथ । यथा भर्तुर्मातृणां मरणे समुपस्थिते ॥
आशौचे च समायाते नित्यश्राद्धं न वै कृतम् । व्यतीपातादि कालेषु कृतन्तु वचनात्तव

वसिष्ठ उवाच ।

एते हि मुनयः सर्वे तथा शम्भुरयं द्विजः । एतन्मुखाद्विशेषेण निर्णयस्तु भविष्यति ॥
तद सर्वे विनिश्चित्य मुनयः शम्भुमब्रुवन् । यद्वास्माकमशेषं त्वं द्विजवर्य ! महानसि ॥

शम्भुरुवाच ।

त्यक्तव्यं यच्च वै श्राद्धं पुनः कर्तव्यमेव च । सूतके समनुप्राप्ते विघ्नेषु च यदाऽभवत्
मासिकान्युदकुम्भानि श्राद्धानि सफलानि च । प्रतिसांवत्सरं श्राद्धं सूतकानन्तरं विदुः

त्यक्तान्यन्यानि यावन्ति सूतके विघ्नसम्भवे ।
अनन्तरं हि कार्याणि सर्वाणीति न संशयः ॥ ६८ ॥
मासिकानि समस्तानि श्राद्धं प्रत्याब्दिकं तथा ।
सूतकानन्तरं कार्यं विघ्नेऽन्यस्मिन्यतोऽन्यथा ॥ ६९ ॥

एकादश्यां कृष्णपक्षे कर्तव्यं शुभमिच्छता । तत्र व्यतिक्रमे देतावमायां क्रियते तु तत् ॥
यथोत्तरदिनेष्वेव कर्तव्यं यद्यविघ्नतः । कृष्णपक्षे त्वमायां तु कर्तव्यं शम ! नो कृतम्
मृताहस्य यदामासो न ज्ञायेत कथञ्चन । मार्गशीर्षेऽथवा माघे श्राद्धं तद्दिवसे स्मृतम्
यदा तु वासराज्ञानं मासस्य ज्ञानमेव च । अमायामेव तन्मासे श्राद्धं सांवत्सरं भवेत्
दिनमासापरिज्ञाने प्रोषितस्य मृतस्य च । तत्तिथ्यां तद्दिनं प्राहुः तत्राज्ञानं यदा भवेत्

आश्विनामा च मार्गामा माघामा च दिनत्रयम् ।
तत्र वान्यतमं प्राहुः दिनमासाप्रतीतितः ॥ ७० ॥

वृद्धिसप्तमसीमन्त प्रेतश्राद्धानुमासिकम् । नित्योदकुम्भश्राद्धं च मासेष्वधिकेऽपि च
ग्रहणे पुत्रजन्मादौ कर्मण्यपि च शान्तिके । सङ्कल्पिते च सर्वस्मिन्नधिमासो न दुष्यति

रोगी यदा मनुष्यः स्याच्छ्राद्धकर्मण्युपस्थिते ।



भार्यां वा भ्रातरं वापि शिष्यं वापि नियोजयेत् ॥ ७८ ॥
तस्याभावेन हानिः स्यात्कर्मणः श्राद्धसंज्ञिनः ।
नित्यश्राद्धे यथाशक्ति भोक्तारं तु नियोजयेत् ॥ ७९ ॥
अमावास्या मासिकं च मृताहव्यतिरेकि यत् ।
स्वयं कर्मण्यशक्तश्चेत्सुतं विप्रं नियोजयेत् ॥ ८० ॥

राजकार्यनियुक्तस्य दासग्रहणवर्तिनः । व्यसनेषु समस्तेषु श्राद्धं विप्रेण कारयेत् ॥८१
प्रातःकाले तु न श्राद्धं प्रकुर्वन्ति द्विजोत्तमाः । नैमित्तिकेषु श्राद्धेषु न कालनियमःस्मृतः
मृताहव्यतिरिक्तस्य प्रक्रमःकुतपःस्मृतः । कुतपादथवाप्यर्वागारभ्यकुतपो भवेत् ॥८३
मासेमासे यथाश्राद्धेऽपराह्णस्पृग्विधीयते । अपराह्णव्यापिनी स्यादुभयत्र यदा त्वमा

क्षये पूर्वा तु कर्तव्या वृद्धौ साम्ये परा स्मृता ।
अमावास्या तु या हि स्यादपराह्णद्वये समा ॥८५॥
क्षये पूर्वा परावृद्धौ साम्येऽपि च परा भवेत् ।
क्षीणस्तु चन्द्रमा यत्र तत्र श्राद्धं तु पार्वणम् ॥ ८६ ॥
अमादृभागे सूक्ष्मोऽसौ भूतांशो स नास्ति चेत् ।
मध्याह्नव्यापिनी सा स्यादेकोद्दिष्टे तिथिर्भवेत् ॥ ८७ ॥
सायाह्नव्यापिनी या स्यात्पार्वणे सा तिथिर्भवेत् ।
अल्पापराह्णगा याऽमा ग्राह्या श्राद्धादिके भवेत् ॥ ८८ ॥

मृताहे त्रिमुहूर्ता च सायङ्काले तिथिर्भवेत् । परे ह्रस्तद्गता यत्र त्रिमुहूर्तं तु पूर्ववत् ॥
तथापरेद्युः श्राद्धं स्याज्ज्येष्ठपुत्रस्य नान्यथा । अमाश्राद्धं यदाकुर्यान्मृताहे समुपस्थिते
मध्याह्नव्यापिनी तत्र ह्यद्विजस्य विधीयते ॥ ९१ ॥

राम उवाच ।

श्राद्धक्रमप्रदीपेन मर्त्यकर्मक्रमं त्वया । प्रासङ्गिकानां धर्माणां निर्णयं वक्तुमर्हसि ॥९२

शम्भुरुवाच ।

श्राद्धस्य दिवसेप्राप्ते पूर्वेद्युर्नियमान्वितः । निमन्त्रयीत विप्रेन्द्रान्विप्रलक्षणसंयुतान् ॥

पफभुक्तः प्रशनर्यमन्त्यजायैर्भाषणम् । दन्तधावनमभ्यङ्गनिश्चकेशा...
कर्ता कुर्वीत पूर्वेद्युस्त्यक्त्वाचैव परेऽहनि । गृहीत नियमानुकान्सर्वमेतत्परित्यजेत् ॥
त्रिकालंचैव पूजाचेत्प्रातर्द्वयं यजेत्स्वकम् । अरुणोदयवेलायां करोति यदि पूजनम् ॥
अधःशायी तथाभूतः प्रातरुत्थाय कर्मवित् ।
प्रातस्त्यमपि यत्कर्म तत्कृत्वा स्नातपूर्वकम् ॥ [illegible] ॥
ऋणत्रयविनिर्मुक्तो यास्यति ब्रह्मतत्परम् । सूर्यस्योदयवेलायां शिवपूजां करोति यः ॥
सूर्येण समतेजस्वी शिवलोके महीयते । उदिते भास्करे पश्चाद्घटिकान्तरपूजनम् ॥९९॥
रुद्रेण समतेजस्वी शिवलोके महीयते । द्वितीयघटिकायां तु यदि पूजनमीशितुः ॥
वायुना समतेजस्वी शिवलोके महीयते । तृतीयघटिकायां तु शिवपूजां समाचरेत् ॥
कुबेरसमतेजस्वी शिवलोके महीयते । चतुर्थीपञ्चमीषष्ठीसप्तमीघटिकासु यः ॥ १०२ ॥
शिवं पूजयते भक्त्या शिवलोके मरुत्समः । तत्काल एव क्रियते पूजायत्कालनोदिता
यथाप्रतिज्ञमथवा गृहीतनियमो यजेत् । उपचारेषु शक्त्या वै नियमं परिपालयेत् ॥
नियमातिक्रमे वापि यागश्च स्याद्विमोघेदि ॥ १०५ ॥
श्रीराम उवाच
क पूजा देवदेवस्य शङ्करस्यामितौजसः । स्मरणात्पापनाशस्य स्मरणान्मोक्षदस्य च
शिवस्य शिवरूपस्य शिवतत्त्वार्थवेदिनः । सोमस्य सोमभूषस्य सोमनेत्रस्य राजितुः
वेदमूर्तेरमूर्तेश्च वेदसारस्य वेदिनः । वेदवेदाङ्गवित्तस्य वेद्यावेद्यस्य योगिनः ॥१०८॥
गोक्षीरसमदेहस्य गोक्षीरस्नानमोदिनः । गोपालिनस्त्रिनेत्रस्य त्रयीनेत्रस्य मायिनः ॥
प्रश्नमध्ये तथा रामं शिवध्यानमथाविशत् । स्थाणुभूत इवासीनो नासाग्रन्यस्तलोचनः
आनन्दनिष्यन्दविलोचनाश्रुप्रवाहसंस्पृष्टकपोलदेशः ।
दधार देवं गिरिशं हृदम्बुजे गोक्षीरसुस्निग्धसुवाहपात्रम् ॥ १११ ॥
प्रतिबिम्बमथो गात्रे रामस्य समदृश्यत । दृष्ट्वैवविम्बितं शम्भुं चतुर्बाहुं त्रिलोचनम्
... ं परमं याताःसर्वे मुनिहरीश्वराः । शम्भोर्वक्षःस्थितं रामंदृष्ट्वा सीताकृतिशुभम्
बभूवुर्यामार्द्रमथ राममुदैक्षत । स्वप्रश्नमनुसन्धाय प्राह सर्वं यदेति च ॥११४॥

शम्भुरुवाच ।

अचले या सदा पूजा चलेवापि यथेच्छया । लिङ्गसम्पूजनं मुख्यमलाभेच हिमाद्रिषु ॥
अधिकारविशेषेण तत्र तत्रापि पूजनम् । विगुणं सगुणं वापि सफलं लिङ्गपूजनम् ॥
प्रतिमादि कृतापूजा विगुणा सफला न हि । अचलेवाचलेवापि पूजालिङ्गे प्रशस्यते ॥
चलस्य पूजनं वक्ष्ये स्थापनोद्वासने तथा । ते उभेन विजानाति कश्चिन्मुनिरपि क्वचित्
स्थापयन्ति हृत्पद्मे वै गोपयन्ति यजन्ति च । उद्वासयन्ति देवेशं शङ्करं योगिनःसदा
क्रियांकालीवहोतॄणां बही देयं त्रियम्बकम् । पूजकानामशेषाणां शिवलिङ्गे महेश्वरम्
लिङ्गस्य स्थापनं पूजा उद्वासनमथैव च । धारणं शङ्करस्यैव लिङ्गमेव महेश्वरम् ॥
सञ्जिकं परमोत्कृष्टं स्वर्णंचैव विनिर्मितम् । राजतैर्वादलैःकार्यं राजतैर्वापवैस्तु यत् ॥
लतासूत्रैरथोवापि रचितं दारुणाऽथवा । वस्त्रेण वाऽथ रचितं मृदा विरचितं भवेत्
तत्र संवेष्ट्य वस्त्रेण सुगन्धेनसमन्विते । धौतवस्त्रयुगे शुद्धे मृद्वासनसमन्विते ॥१२४
शीतोष्णरहिते पादचतुष्टयसमन्विते । प्रावृत्तिच्छेदनोपेते कृमिकीटविवर्जिते ॥१२५

धौतेन मृदुवस्त्रेण सर्वतो वेष्ट्य तं शिवम् ।
विन्यस्य सञ्जिकामध्ये प्रावृत्य च पुनर्विभुम् ॥१२६॥

एषा हि सञ्जिकारामदेवस्याग्रेऽतिकीर्तिता । तस्य च स्थापनंपाठोरहस्ये च महेशितुः
अथवा भित्तिमूलेस्याद्देववेद्यामथापि वा । सुरक्षिते तथादेशे-रक्षकं च नियोजयेत् ॥
प्राणादेरविनाभावं कुर्वीत नियमैःसह । एतद्धि राजसंप्रोक्तं स्थापनं परमात्मनः ॥
सात्त्विकं स्वसमीपस्थं धारणं तामसं पुनः । धारणं गात्रसंस्पर्शमशेषदेहगोपनम् ॥
मस्तकेधारणं मुख्यं ब्रह्मणा च तथा कृतम् । बिम्बस्य मुकुटस्यान्ते धारणं शुभमुच्यते

ललाटे धारणं शस्तं यथा लक्ष्म्या धृतं शुभम् ।
वाणेन च धृतं मूर्ध्नि दक्षिणोरसि वा पुनः ॥ १३२ ॥

कर्णे च हरकर्णेन मुनिना परमर्षिणा । विनिर्मिथ तथागात्रं लोहस्थानं प्रकल्प्य च
धारयन्ति तथालिङ्गं राक्षसा-केचिदुत्तमाः । अनिकेतनमर्त्यानामशक्तानां शिरोधृतिः ॥
अधमाधममाख्यातं नीविबन्धादि धारणम् । तेषु तुच्छिष्टसंप्राप्तौ मस्तके धारणंभवेत्

अधमाधमवृत्तीनां सदा वै लिङ्गधारणम् । पापिनामपि चाश्चर्यं यमलोके न विद्यते ॥

श्रीराम उवाच ।

चित्रगुप्तेन लिखिता ललाटे या लिपिर्दृढा । तया तु लिप्या नियतं नरकं कथमन्यथा

करोति पूजनं शम्भोः पापं नाशयते कथम् ॥ १३७ ॥

शम्भुरुवाच ।

पापं नाशयते कृत्स्नमपि जन्मशतार्जितम् । मर्त्स्यनाम्सर्वपापानांस्मरणाच्च महेशितुः

भस्मेति पदमाख्यातं तस्य धारणमुत्तमम् । यथाविधि ललाटे वै वह्निवीर्यप्रधारणात्

नाशयेल्लिखितां यामीं परस्यामिव हव्यभुक् । कर्णोपरि कृतंपापं नश्यंस्यान्मुखधारणे ॥

कण्ठे च धारणात्कण्ठभोगादि कृतपातकम् । बाह्वोर्बाहुकृतं पापं वक्षसि मनसाकृतम्

नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा । पार्श्वयोर्धारणाद्राम परस्त्र्यालिङ्गनादिजम्

तद्भस्मधारणं शस्तं सर्वत्रैव त्रिपुण्ड्रकम् ।

ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धारणम् ॥ १४३ ॥

गुप्त्यै लोकत्रयाणां च धारणं तेन वै कृतम् । धृतं पञ्चदशस्थानेषुद्धभस्माभिमन्त्रितम्

जानुयुग्मे बाहुयुग्मे कोष्ठोपरियुगे तथा । धारणं सर्वदेहानां पूजायै धर्मसंमतम् ॥

भस्माशना भस्मशय्या भस्मोद्धूलितविग्रहाः ।

भस्मस्नानाः सदापापैर्मुच्यन्ते नात्र संशयः ॥ १४६ ॥

आदौ ब्राह्मणदीक्षायां त्रियायुषमिति स्मृतम् ।

प्रसवे च मनुष्याणां भूतावेशेऽपि रक्षकम् ॥ १४७ ॥

सर्पादि विषहान्यर्थं सर्वेषां साधनं त्विदम् । अपि वा वैष्णवो मर्त्य अथवापीतरोजनः

भस्मस्नायी भस्मयुक्तः कर्मस्वधिकरोति वै ॥ १४९ ॥

श्रीराम उवाच ।

स्ममाहात्म्यमादौ मे भस्मायुष्यं हि कस्य वै । कथं हियक्षते ह्येतत्सर्वमेतद्वदस्व मे ॥

शम्भुरुवाच ।

[illegible] देहिनः । पापघ्नं शीतमुष्णं च स्पर्शाच्छिवपदप्रदम् ॥

अत्र ते कीर्तयिष्यामि चेतिहासं पुरातनम् । आसीद्वासिष्ठवंशस्तु धनञ्जय इति द्विजः
तस्य भार्याशतं ह्यासीद्रूपलावण्यसंयुतम् । तासामेका ॥ सुषुवे शामाका करुणं मुने

भार्याणां सङ्ख्यया राम ! सुताश्चासंस्तपस्विनः ।

पित्रा विभागस्तेषां च विषमः परिकल्पितः ॥ १५४ ॥

भ्रातॄणां च तथाप्येव वैरबन्धो महानभूत् । नराणामेकजातीनां वैरं नियतमेव तु ॥१५५
अथासौ करुणो गत्वा भवनाशिनिकातटे । नानामुनिगणैः सार्द्धं नरसिंहदिदृक्षया ॥
नृसिंहदर्शनार्थन्तु ब्राह्मणेन तु केनचित् । उत्कृष्टफलजम्बीरमानीतं रूपगन्धवत् ॥१५७
करुणस्तु समादाय ह्यजिघ्रत्फलमुत्तमम् । तत्र स्थिता द्विजगणाः शापेन समोजयन्
मक्षिका भव पापात्मन्वर्षाणां शतमप्यतः । शापायासनं भविता दधीचेन महात्मना ॥

अथ मक्षिकतां प्राप्तो भार्यामिदमभाषत ।

मक्षिकात्वमहं प्राप्तो मां शुभे ! पालयस्व भोः ॥ १६० ॥

इत्युक्त्वा स तथा भूतोऽयभ्राम च ततस्ततः । अथैवंविधमाशाय ज्ञातयः पापनिश्चयाः
तद्वधे यत्नमास्थाय तैलमध्ये ह्यपातयन् । मृतं पतिमथादाय दुःखिता सा कृशोदरी ॥
तद्दुःखशमनार्थाय प्राह देवी ह्यरुन्धती । अमुं सञ्जीवयाम्यद्य भस्मनैव शुचिस्मिते ॥
अथाग्निहोत्रजं भस्म अरुन्धत्यै न्यवेदयत् । मृत्युञ्जयेन मन्त्रेण मृतजन्तौ तथाऽक्षिपत्
मन्दवायुं तथा चक्रे व्यजनेन शुचिस्मिता । उदतिष्ठत्ततो जन्तुर्भस्मनोऽस्य प्रभावतः ॥

ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् ।

मृते भर्तरि सा साध्वी दुःखिता च शुचिस्मिता ॥१६६॥

दधीचं नाम विप्रेन्द्रं महामाहेश्वरं मुनिम् । जगाम शरणं साध्वी प्राह विप्रस्तपोधनः
देवायुधविहीनं तु जमदग्निं तपोनिधिम् । भस्मैवजीवयामास कश्यपं च तथाविधम्
तानपि तथाभूतान्मामप्येताद्दृशं पुरा । तस्मात्तु भस्मना जन्तुं जीवयामि तवानघे ! ॥

इत्येवमुक्त्वा भगवान्दधीचो महेश्वरं वै शरणं जगाम ।

भस्माभिमन्त्र्याथ करे गृहीत्वा सञ्जीवयामास धवं सुसाध्व्याः ॥ १७० ॥

देहस्य करस्पर्शाद्विशापः करुणोऽभवत् । स्वरूपं च ततो गत्वा स्वमाश्रमपदं ययौ

तस्य चानुचराः सर्वे परिचार्योपतस्थिरे ॥ २५ ॥

सुरापः सचिवः प्राह किंकार्यं मम चादिश । अथ राजाऽमात्याऽशक्तो निर्गतायुस्तदा
नाभेरधस्तु क्षीणायुः कथञ्चिद्वाक्यमुक्तवान् । त्वं सर्वकाले दैत्येन्द्र प्रहर प्राह
इत्यन्योन्यतया समाराद्यौ यमदूताः समाययुः । विचित्रं बन्धनेयत्नं यत्नुस्ताडनक्ष
चूर्णिता बन्धपाशाश्च हेतिदण्डाश्च चूर्णिताः । तत्राक्रम्परामात्रे च तद्गुणमिथाम

अथायातः स्वयं मृत्युः पाशेनैनमयोजयत् ।

मृत्युपाशमपि च्छिन्नं वीक्ष्य मृत्युरचिन्तयत् ॥ २६ ॥

सर्वमर्त्यमृतिर्दृष्टा दृष्टानैतादृशी क्वचित् । इति चिन्तापरे मृत्यौ ज्वालाचक्रःप्रताप

वीरभद्रेण निर्दिष्टः सहसाऽऽयाच्च शूलभृत् ।

ज्वालाचक्रमथालोक्य मृत्युस्तूर्णं पलायितः ॥ ३१ ॥

पलायमानं तं दृष्ट्वा मृत्युं वह्निमुखस्तदा । अरे रे चोर चोर त्वं तिष्ठ तिष्ठ क यास्य
यतसो मुच्यते चोरः शूलारोपणमात्रतः । एवमाभाष्य मृत्युं तं शूलप्रोतमकल्पयत्
शूलस्कन्धगतं कृत्वा दूतान्सङ्ग्रथ्य रज्जुना । पादाङ्गुलधिन्यस्तानादायदूपमध्यगा
विमानवरमारोप्य नीतवाधसुशोभितम् । वीरान्तिकमथोगत्वा सर्वमस्मै न्यवेदयत्
वीरभद्रोऽपि तत्सर्वं शङ्करायामितात्मने । नानामुनिगणैर्देवैर्ब्रह्मविष्णुपुरःसरैः ॥३६
सेव्यमानाय देवाय पार्वतीसहिताय च । प्रणिपत्य निवेद्याथ शूलस्थं मृत्युमेव च ।

तूष्णीं बभूव विश्वात्मा वीरभद्रः प्रतापवान् ॥ ३८ ॥

अन्यायमनं वीक्ष्य शिवो निगर्हयन्कथं त्वयैतद्गण साहसं कृतम् ।

बिभेषि मृत्योर्न कथं यमाधिकाद्वदस्व सर्वं परमार्थतो मे ॥ ३९ ॥

प्रणम्य तं वह्निमुखोऽतिरोषो मृत्युं समालोक्य ननर्त दर्पात् ।

उवाच चौर्यं कृतमेव मृत्युना तदेव शूलेऽपि मया प्ररोहितः ॥ ४० ॥

विमोचयामास शिवोऽपि मृत्युं दूतानशेषान्निरुजश्चकार ।

मृत्युं समालोक्य शिवो यमाचे मन्नाम येषां मरणे समास्ते ॥ ४१ ॥

मच्चेतसामन्यधियां च नाम हीनाक्षरं वाऽधिकवर्णयुक्तम् ।

ममैव लोकं प्रददामि सत्यं ह्यनेन नामप्र हरेति भाषितम् ॥ ४२ ॥
प्रशब्दमात्रं त्वधिकं हरेरितपदप्रदं वै पदमीरयन्ति ।
आरादमूस्त्वं जपतो नमस्व मदीयवाक्यं च यमं वदस्व ॥ ४३ ॥
नतिं यतिं कीर्तिमुपास्तिमाश्रिता दास्यं च कैङ्कर्यमथ श्रुतिप्रदाः ।
पञ्चाक्षरोक्तिं शतरुद्रियोक्तिं शिवस्य कुर्वन्ति न ते विचार्याः ॥ ४४ ॥
मन्नामरुद्राक्षविभूतिधारणो ममाग्रतो यस्तु पुराणवक्ता ।
सर्वेषु पापेष्वपि तेषु सत्सु प्रशास्म्यहं नैव यमाधिकारः ॥ ४५ ॥
ये चापि पापान्वितमायिनो नराः परान्नयज्ञादिवधूभुजश्च ।
वाराणसीमृत्युपराश्च ये वै श्रीशैलमर्त्यांश्च न ते विचार्याः ॥ ४६ ॥
यूकाश्च दंशा अपि मत्कुणाश्च मृगादयः कीटपिपीलिकाश्च ।
सरीसृपा वृश्चिकशूकराश्च काशीमृताः शङ्करमाप्नुवन्ति ॥४७॥
इदं नाम गृणन्ध्यायेत्तो वै हृत्पद्ममन्दिरे । त्रियम्बकं विरूपाक्षं सोमं सोमार्द्धभूषणम्
त्रिनेत्रकं त्र्यधिनेत्रं सोमसूर्याग्निलोचनम् । तं नमस्कृत्य दूरस्थो भव मृत्यो ! ममाज्ञया
अथाकर्ण्य शिवप्रोक्तं मृत्युस्तुष्टाव शङ्करम् । नमस्ते देवतानाथ ! नमस्ते देवमूर्तये ॥
सर्वेशाय नमस्तुभ्यं पशूनां पतये नमः । अथ देवो महादेवो मृत्युं प्राह वरं वृणु ॥
स्तोत्रेणानेन तुष्टोऽस्मि मृत्युर्वरमयाचत ।
त्वदीयं पालय विभो ! मां च शङ्कर ! पापिनम् ॥ ५२ ॥
तथेत्युक्त्वा मृत्युमीशो गच्छ वत्सेति चाब्रवीत् ।
यमलोकं गतः सोऽपि यमायाशेषमुक्तवान् ॥ ५३ ॥

शम्भुरुवाच ।

य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । विमुक्त सर्वपापेभ्यो याति शङ्करसन्निधिम्
इति श्रीपाद्मेमहापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे एकादशोत्तरशततमोऽध्यायः

# द्वादशाधिकशततमोऽध्यायः

## शिवनाममाहात्म्ये देवरातसुतायाःकलाया वृत्तान्तवर्णनम् ।

शम्भुरुवाच ।

अथान्यदपि निर्वच्मि प्रमदाख्यानमुत्तमम् । सुतया देवरातस्य यत्प्राप्तं नाम कीर्तनात्
देवरातसुता बाला कला नामाऽतिरूपिणी । धनञ्जयसुतस्यासीद्भार्या शोणस्य धीमतः

तावुभौ नियतौ नित्यं धर्मकर्मपरौ शुभौ ।
लङ्घयन्तौ निधिमथो गङ्गास्नानाय तौ गतौ ॥ ३ ॥

प्रवाहपतिते कूले मृत्तिकानयनाय तौ । कूलादाकृष्य मृल्लोष्टं दृष्टवन्तौ महाघटम् ॥ ४ ॥
राजतं चोर्द्ध्वपाषाणमथ शोणः प्रियां वचः । इत्यमाह कथं कार्यं किं कर्तव्यं हि नोहितम्

भार्योवाच ।

न नारीमतमालम्ब्य किञ्चित्कार्यं समाचरेत् ।
न च भार्या वदेद् गुह्यमप्रियं वाऽथ किञ्चन ॥ ६ ॥

यदि नारीसमक्षं तु द्रविणं दृष्टिमापतेत् । वञ्चयति तथा नारी स्वीदृशोपायसंश्रयैः ॥

अस्माभिर्न हि सम्प्रेक्ष्यं किं वा तत्र हि तिष्ठति ।
द्रविणं चेत्र संप्रेक्ष्यं पापोदकं भविष्यति ॥ ८ ॥
मत्याचार्ते तु यदि चेत्कुतो ज्ञानविनिश्चयः ।
भवद्भिरस्मिन्नदानीं चेत्तिभूतः कोऽपि तिष्ठति ॥ ९ ॥
तिरोधानं न किञ्चिच्चेन्मायया कोऽपि तिष्ठति ।
न चेन्मायामनुप्राप्तं क्षेत्रपालस्तु तिष्ठति ॥ १० ॥

न हि चेद्दैवयोगेन तिष्ठति ब्रह्मराक्षसः । न कोऽपि चेन्महाधियो राशी तत्र भविष्यति
न च जानाति चेद्राजा व्यवहारादिसम्भवः । स चेद् गुप्तप्रकारेण,चोरबाधा भविष्यति
.. महानर्थो भविष्यति । प्रत्येवार्थवन्तौ मृत्तं सोपलिरसा प्रभावे

भोगाद्भोगान्तरेच्छा च सर्वानुष्ठाननाशिनी। जानाति यदि नारी स्वं भावयोगगतं तथा
नारी स्वतन्त्रतामेतिरोपाल्लम्पप्रकाशिनी। रोपे विश्वासता याति तदा दोपः पुरोदितः
विश्वासिनि च विभ्रमः प्रवासो वान्यचित्तता।
विभ्रमाज्जायते स्त्रीणां नानाविधि विचेष्टता ॥ १६ ॥
यं कश्चित्पुरुषं दृष्ट्वा युवानं प्रीतिरापतेत्।
प्रीत्या संजायते योगो योगान्मैथुनसङ्गतिः ॥ १७ ॥
सतत मैथुने जातेविभ्रमान्तरमापतेत्। भवता वा तथा पूर्व भुक्तेदानीं च भुज्यते ॥
कां प्रतीच्छा तथेदानीं प्रीतिः कस्यामथापि वा।
का विदग्धा सुसंस्निग्धा पुरुषादन्यसञ्चरेत् ॥ १९ ॥
योऽब्रवीदथ वाक्यं तां यदि ब्रूयास्त्वमद्य मे।
सर्वमेव तथा वच्मि नान्यथा वाक्यमुच्यते ॥ २० ॥
र्यं च धूर्ततां याता तथा रूपान्तरेण च। द्रव्यमादाय यत्किञ्चिदनुवर्तेस्वतन्त्रतः ॥
स मारयित्वा तां द्रव्यं गृहीत्वा पातयिष्यति।
अथ पूर्वं पतिमृतौ प्रविशेत्नाशुशुक्षणिम् ॥ २२ ॥
वैधव्ये द्रविणं सर्वं धर्मार्थं मे भविष्यति। इतिनिश्चित्य मनसा वैधव्ये समुपस्थिते
योनिकुण्डं समासाद्य दिवा वा यदि वा निशि।
एकान्तस्थानमभ्येत्य विवृत्य वसनं भगम् ॥ २४ ॥
समूचे वचो दुःखातुपस्यस्थकरासती। किं त्वया वै कृतं योने किंवा पापमुपार्जितं
विगतस्य वायवा पापं यत्त्वदन्तरवेशनात्। यच्च कर्तृकृतंपापं मातृकसेवाविवर्जनात्
यतोऽपि कण्डुसम्भूतौ प्रवेशयेदथाङ्गुलीम्। विचित्रचेष्टा कृत्वा तु कण्डूनुद्धरेत्तःपरम्
मर्दयित्वा कराभ्यां तत्सन्ताड्य च विवृत्य तु।
असकृद्धुन्वती पादौ विवृतास्यातिदुःखिता ॥ २८ ॥
धस्त्वाकाष्टमयालिङ्गं यस्तनपीडं यथाप्रियम्। अथोविचित्रचित्तत्वे ततःप्रदुष्टताभवत्
अथवाद्विपुरेस्थितया शाकं व्यवहृतं च यत्।

भान्तस्य वेश्मनि निशि सन्ध्यायां विशिन्नासु च ॥ ३० ॥

त्स्थानपर्येष्वमात्मानं येःकैरप्युपभुज्यते । भगवान्सप्रभावेन शङ्कितोऽपश्यताद्दहत् ॥३१

प्रभातं ॥ गृहं गत्वा रमये देव निश्चितम् । नारी समक्षं त्वयं तु द्रविणे होतदिष्यते

तस्मात्मयापि भवतो न विचारप्रयोजनम् ॥ ३२ ॥

शोण उवाच ।

एवमेतन्न सन्देहो गच्छ त्वं तिष्ठ दूरतः ।

मलमूत्रविसर्गार्थं स्थित्वा गच्छाम्यतः परम् ॥ ३३ ॥

तस्यां गतायां शोणोऽपि वस्त्रखण्डं त्वकल्पयन् ।

एकैकस्मिंस्ततःखण्डे त्वबध्नादुद्रविणं बहु ॥ ३४ ॥

सैकते विवरं जानुदघ्नं कृत्वा ततस्ततः । क्षिप्त्वा धनं पूरयित्वा विष्ठां चक्रे तदोपरि

घटाधारं घटं तं च प्रतिचिक्षेप कुत्रचित् । सर्वमज्ञातवत्कृत्वा स्नानाय प्रययौ मुनिः

तस्य भार्या ततः स्नानं कृत्वा सम्पूज्य पार्वतीम् ।

गच्छेति भर्त्रा सा प्रोक्ता स्ववेश्माभ्यागमत्सती ॥ ३७ ॥

एतामेकाकिनीं ज्ञात्वा मारीचो नाम राक्षसः । भर्तृरूपमथास्थाय कलामेतदुवाच ह ॥

मारीच उवाच ।

सप्तगोदावरीतीरे पवित्रं पापनाशनम् । द्राक्षाराममिति प्रोक्तं यत्र भीमः स्वयं स्थितः

भुक्तिमुक्तिप्रदो नृणां स्मरणात्पापनाशनः । तत्र गच्छावहे शीघ्रं त्वं तु निर्गच्छ सुन्दरि

कलोवाच ।

इदानीमभिषेकाय प्रवृत्तो नाभिषिक्तवान् । कथमेतादृशं त्वं हि पूर्वानुक्तं वदिष्यसि ॥

प्रकृतेरन्यथा भावमुत्पातं विदुरुत्तमाः ॥ ४२ ॥

मारीच उवाच ।

भर्तुरप्रतिकूलत्वं नारीणां धर्म उच्यते । प्रतिकूलानुकूला वा मम शीघ्रं वदस्व तत् ॥४३

तूष्णीं भूत्वाऽथ सा साध्वी भर्तत्येव विचार्य तम् ।

निर्ययौ तेन सा बाला वनमध्ये गता सती ॥ ४४ ॥

अथ मध्याह्नकालेऽसौ क्रियतामाह्निकक्रियाः ।
राक्षसोऽथ वचः श्रुत्वा मानुषान्नफलं स्थितः ॥ ४५ ॥
यत्र तत्रापि गन्तव्यमितो गच्छामहे ततः ।
किञ्चिद्दूरदेशं गत्वा तु गुहां वीक्ष्य सरस्तथा ॥ ४६ ॥
इह स्थाने हि मे स्नातुं कार्यं स्नानमथ प्रिये ! ।
इत्युक्त्वा सरसि स्नात्वा फलाहारं प्रकल्प्य च ॥ ४७ ॥

सोऽवसरे प्राप्ते फलाहृत्यागमत् शिवम् । अयं वशी मम भवाऽस्ति ध्यानपरोऽभवत् अथ ध्यानेन तं घोरं निश्चित्य च पतिव्रता । मौनाति भयपदवा अश्रुपूर्णमुखी तदा ॥ रुदमापतितं पादमित्युक्त्वा निपपात च । एतर्हि तामथो दृष्ट्वा राक्षसः पापनिश्चयः धर्षितुं तामथारेभे न चैतद्दर्शनं प्रति । बलात्कारमथोपक्तुं वर्तमाने तु राक्षसे ॥५१॥ पाषाणतामित्यपर्यन्तं शैलस्थानमकल्पयत् । शिलासममभवद्रूपं राक्षसो वीक्ष्य तामथ ॥

इत्येवं तां हनिष्यामि त्यादयिष्याम्यतः परम् ।
इत्युक्त्वा भ्रामयित्वाऽसिं शिरश्छेत्तुं प्रचक्रमे ॥ ५३ ॥

फलाहमस्पतिर्भार्यां शापं दास्यति सादर । इत्युक्तमात्रे वचसि शिरश्छिच्छेद राक्षसः

मातायां तुष्टं ति तन्यामथ शैवाः समागताः ।
दूता विविधा भरणाःसर्वायुध रताः शुभाः ॥ ५५ ॥

एतां विमानमारोप्य शिवालोकमुपागमन् । तामागतां गिरिसुताहर्षेण प्रतिपूज्य च स्वपादयुगलां शुद्धामुमावाक्यमभाषत । पातिव्रत्येन तुष्टा अभीष्टं प्रददामि ते ॥

कलोवाच ।

दासीभावं प्रयच्छ त्वं त्वत्पादाब्जं मम प्रियम् ।
भाग्यैः किमन्यैर्बहुभिस्तथास्त्विति शिवाऽब्रवीत् ॥ ५८ ॥
इन्द्रादि वनिताभिः सा पूजिताऽथ कलानिधिः ।
एतस्मिन्नन्तरे प्राप्तः शोणो मुनिरथो गृहम् ॥ ५९ ॥
स तत्र दृष्ट्वा तां भार्यां ध्यानयोगपरोऽभवत् ।

रक्षोहतां मृतां प्राप्तां शिवालोकमुमां प्रति ॥ ६० ॥

उमादत्तवरां चापि दृष्ट्वाऽज्ञानचक्षुषां । किञ्चिद्दुःखक्षिरं ध्यात्वापरावृत्य मु
श्वशुरं गतवान्सोऽथ देवरातं मुनीश्वरः । निवेद्य सर्वं सहितो विश्वामित्रमग

निवेद्य तद्वसिष्ठस्य वसिष्ठोऽप्याह तान्मुनीन् ।
गत्वा कैलासमाद्रौ तु दृष्ट्वा देवं महेश्वरम् ॥ ६३ ॥
अनुज्ञां शिवतो लब्ध्वा पार्वतीमन्दिरे गताः ।
देव्यै विज्ञाप्य तत्सर्वं यथार्थप्रवदामतत् ॥ ६४ ॥

तथेत्युक्त्वा मुनिवराः कैलासं शङ्करालयम् । गत्वा प्रणम्य देवेशं वीरभद्रेण प

विज्ञापयामासुरिदं शोणभार्याहृतेति च ।
शिवः प्राह मुनीन्द्रांस्ताञ्ज्ञातमेव मया स्थितम् ॥ ६६ ॥

अकालमरणं त्वस्या आयुर्वर्षशतं स्थितम् । अकालमृत्युयुक्तानां पुनर्जीवनमा
दशायुत्प्रमाणैरा रूपसौभाग्यवत्यपि । भवद्भिरिति निश्चित्य समागतमिह द्विजाः
यमलोकगतानां तु सर्वमेतद्विनिश्चितम् । यमलोकगतानां च गतिरन्या न वि
अनया कीर्तितं नाम प्राणनिर्गमने पुरा । तथा यमलिपिर्दृष्टा कथमायुर्व्यतिर्
अथवा गिरिजायै च निवेदयत तद्वचः । अथ ते पार्वतीपाददर्शनाय गता द्विजाः

प्रणम्य मातरं सर्वे विश्वामित्रोऽब्रवीदिदम् ।
दीनानाथा हृता भार्या मनुपितृकाक्षिताम् ॥ ७२ ॥
रक्षयित्वा पुरा मातरिष्टा त्वं सदा प्रभुः ।
कृत्वा वीर्यां समेवेयं त्वामाराध्य पतिं त्वमुम् ॥ ७२ ॥
शोभो लब्धवती मातस्त्वत्पूजायाः फलं स्थिरम् ।
तपसा लभ्यतेऽपर्णे ! दानेन यदि वाऽपि च ॥ ७४ ॥

मनोरथाभिरथवा कृता सा लभ्यनेमया । पतया परिपिष्टान्तोऽनुमिच्छामि त्वत्
पार्वत्युवाच ।

मत्पूर्वः धैर्यने मायां माद्वीर्डायमे मया । नैनां त्वनुमर्द आज्ञा किं वा त्वं मत्यांगु

विश्वामित्र उवाच ।

ाता त्वमित्येव मया अविशङ्कितमीरितम् । शोणो मुनिरयं मातस्तव विज्ञापयिष्यति

शोण उवाच ।

ामेव भार्याप्रतिमेप्रीतिरत्युत्कटा सति । सैव मे दीयतांभार्यान्यथा मरणं भवेत्

पार्वत्युवाच ।

भार्या पतिसमायेव विषमौ तु विगर्हितौ ।

व वासदृशी चेयं सदृशीं प्रददाम्यहम् । न च मन्मन्दिरे प्रासात्यश्चे देहविवर्जिताम्

शोण उवाच ।

दि नो दीयते चेयं भार्यामन्यां ममप्रियाम् । राज्यं महेश्वरे भक्तिं प्रयच्छपरमुत्तमम्

भविष्यत्येवमेवैतदित्युक्त्वा चाब्रवीन्मुनीन् ।

भोक्तव्यमिह युष्माभिर्ममास्मिन्दिवसत्रयम् ॥ ८१ ॥

ान्तुधारे देवस्य महेशस्यैव तुष्टये । भोजनीयाः सदाकालमष्टौ विप्रा मुनीश्वराः ॥

ष्या यत्र कुत्रापि व्रतमेतदुपक्रमेत् । वत्सरे परिपूर्णे तु महाराजसमीश्वरम् ॥८३॥

निष्कप्रमाणेन तदर्द्धेनैव कारयेत् । श्वेतवस्त्रयुगं सूक्ष्मं चामरे व्यजने तथा ॥८४॥

पादुकोपानहं छत्रं सर्वं विप्रे नियोजयेत् ।

स्वशक्त्या दक्षिणां दत्त्वा ब्राह्मणांश्च विसर्जयेत् ॥ ८५ ॥

द्यापने कुर्यादादौ मध्ये तथा सुधीः । दिने दिने तथा पूजा सोमस्य परमात्मनः ॥

देवस्य विद्महे महादेवस्य धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ ८७ ॥

इति पूजामन्त्रः ।

ण्डले पूजयेद्देवं प्रतिमायामथापिवा । एकभक्तं स्वयं कुर्याद्ब्रह्मचर्यसमन्वितम् ॥

सोमव्रतं प्रोक्तं शिवतुष्टिप्रदं शुभम् । य एवं कुरुते भक्त्या नारी वा पुरुषोऽपिवा

व शङ्करस्यासौ नित्यमेवानुवर्तते । अथ सोमदिनं प्राप्तं मध्याह्नात्परतो भुक्तिः

यूयं च सर्वे मुनयः कुरुध्वाह्निकक्रियाः ।

माध्याह्निकीं क्रियां कृत्वा भोक्तुमर्हथ सत्तमाः ॥ ९१ ॥

तुर्यंममाकर्ण्य हरेर्गुणान्वा ममस्य च । अनुज्ञामाप्य ते सर्वे गता भागीरथीं नदीम्
सङ्गमे मध्यतो गृहे कृत्वा माध्याह्निकीं क्रियाम् ।
पितृसंकृतो कृत्वा च गोष्ठीमगमन्पके: ॥ ९३ ॥
व ते पार्थमीगेहं गत्वा देवीं प्रणम्य च । लोकमातुर्नियोगेन शालङ्कायनकात्मजः ॥
द्मशालनगुणानुपचारानकल्पयत् । पञ्चगन्धकमादाय तान्मुनीनभ्यलेपयत् ॥ ९५॥
राज्यं च महदाप्नोति यो दद्यात्पञ्चगन्धकम् ।
पञ्चबाणसमो भूत्वा स्त्रीणां वल्लभतामियात् ॥ ९६ ॥
त्रिगुणं यो हि दद्यात्तु सोऽपि मारसमो भवेत् ।
कामी त्वकामी यः कुर्यात्कैलासे पञ्चयस्सरान् ॥ ९७ ॥
र्वगन्धसमोपेतो भोगविशेषार्थसंयुतः । यथेष्टवर्तनो भूत्वा ततो जायेत भूमिपः ॥९८
कस्तूरीचन्दनं कुङ्कुमगरुद्वितयं तथा । पञ्चगन्धं समाख्यातं सर्वकार्येषु शोभनम् ॥
विलसपञ्चगन्धेषु ब्राह्मणेषु महात्मसु । आसीनेषु तदाभ्यागाद्ब्राह्मणः स्थविरः कृशः
उन्मत्तवेषो दिग्वासा जराजर्जरितस्वरी ।
गल्वाटः श्वासकासी च बहुहिक्की क्षुधान्वितः ॥१०१॥
लालास्नुतः श्मश्रुकूर्चः श्लेष्मानद्रः स्खलत्पदः ।
द्वयवयपा तथा नारी सर्वाभरणभूषिता ॥१०२॥
रूपलावण्यसंयुक्ता लोकोत्कृष्टस्वरूपिणी । पुरुषान्रूपसंयुक्तान्वीक्षन्ती च ततस्ततः ॥
गायन्ती त्वथ नृत्यन्तीतं दृष्ट्वाऽऽह सतीपतिम् । प्रवाधने वृद्धवं शीघ्रमेहि कुशायन
आलम्ब्य त्वत्करं वृद्धदुःखितामित्यमस्म्यहम् । भूषणं वसनं घ्राणं स्रग्विलेपनमेव च
हासो गीतिस्तथापानं मण्डनं शोभनं गृहम् । सर्वमृतुसमृद्धिश्च कामस्यैवाभिवृद्धये
सर्वेषामेव कामानां रतिरेका प्रयोजनम् । सुखानि सर्वाण्येकत्र रतिरेकत्र च स्थिता
तुलया तुलितं सर्वं रतिः शतगुणाधिका । तन्मादृशीं समासाद्य भवन्तं किं करिष्यति
इति चान्यानि वाक्यानि ब्रुवाणा गृह्य वै करे ।
तदुत्तरमुवाचेदं किं कुर्मो भाग्यमीदृशम् ॥ १०६ ॥

मा मारय दुरुक्त्या त्वं मां विज्ञायाथ चेदृशम् ।
एतादृशो द्विजः प्रायात्पार्वतीमन्दिरं तदा ॥ ११० ॥
अविज्ञायैव गिरिजामिदं वचनमब्रवीत् ॥ १११ ॥

द्विज उवाच ।

अन्नार्थिनमिह प्राप्तं विद्धि मामतिथिं मुने । भोजनावसरे प्राप्तं ब्राह्मणान्नहि भोजय
तद्वार्याघचनं प्राह क मुनिर्योऽपिदेव हि । अन्धस्य वचनं सर्वमेवनेतादृशं हृदम् ॥ ११३॥

पार्वत्युवाच ।

प्रक्षाल्य चरणावेतमासने चोपवेशय । आम्बुनदकृतेऽतीव भोज्येनातर्पयद्द्विजम् ॥ ११४
सुपक्वपक्वोपेतममृतं ब्रह्मवादिनीम् । अरुन्धतीमथाहूय पर्यवेषयदम्बिका ॥ ११५ ॥
कला चारुन्धती चैव अनसूया पतिव्रता । परिवेषं पदार्थानां स्रग्गन्धाक्षतभूषणाः ॥
अकुर्वन्ननिघकाथाक्याल्पकूलानां पृथक्पृथक् ।
भुञ्जानेषु तु विप्रेषु दिग्वासा ब्राह्मणाकृतिः ॥ ११७ ॥
क्षणेन बुभुजे सर्वं दातुं नोशेकुरङ्गनाः । अथ सा गिरिजा देवी स्वयं दातुं प्रचक्रमे ॥
यथा दत्तमशेषं तु क्षणेनाश्नाति स द्विजः । भाण्डस्थितमशेषं च भोक्तुमैच्छत्प्रियायुतः
तथाम्बिकासमादाय प्रादादक्षय्यमस्त्विति । अथ वामकरेणासौ भोक्तुमैच्छत्ततःसती
तथाप्यक्षय्यमेवास्तु तवान्नमिति चार्पयत् । करान्तरमथोत्पाद्य भोक्तुमैच्छद्द्विजोत्तम
एवं करसहस्रं च कृत्वैच्छद्भोजनं द्विजः । दत्त्वा दत्त्वा पुनर्देवी सन्तुष्टा न च कोपना
न विसमन्यथा कर्तुं शक्यमस्या इति द्विज ।
प्रक्षाल्य हस्तौ चरणौ हस्तार्पितसुगन्धवान् ॥ १२३ ॥
पार्वतीं वाक्यमाहेदं तोषितोऽहं वरं वृणु ॥ १२४ ॥

पार्वत्युवाच ।

मम दातुं वरं शक्तो यदि त्वं ब्राह्मणोत्तम । वरेण मम किं कार्यं शङ्करो मे यतः पतिः
तदाह ब्राह्मणो देवीं शङ्करः कीदृशस्त्विति ।
सदृशोऽसौ त्वया नो वा त्वद्योग्यो नान्यथा भवेत् ॥१२६॥

ापिस्मत्यमप्येष कर्तुं शक्यं गुणाढ्यता । नोचेदेतादृशी भार्या मदधीना कथमभवेत्

पार्वत्युवाच ।

त्वद्भार्योपवचनं श्रुत्वा तव वाक्यं तथा द्विज ! ।
अपलापस्त्वयं प्रत्यक्षकृतं किं वा तथा चिरम् ॥ १२८ ॥

ब्राह्मण उवाच ।

म्मिल्लं ते करिष्यामि ममाङ्कं त्वं समारुह । प्रचलेद्यदि ते चित्तं पातिव्रत्यं कुतस्त

पार्वत्युवाच ।

म मतं द्विजश्रेष्ठ शङ्कराङ्कारोहणम् । अथ तच्चित्तमाज्ञाय भवान्याः परमेश्वरः॥१३०
पद्मवर्णवया भूत्वा सुस्निग्धनयनघनः । सुस्निग्धचारुनयनो गोक्षीरसमविग्रहः ॥
ोटिकन्दर्पलावण्यः सर्वाभरणभूषितः । स्वपार्श्वस्थितनार्यंसे प्रसारितभुजद्वयः ॥

गायन्मन्दं तथा साकमुमया पटुता यथा ।
अथ तां पार्वतीं शम्भुः करेणाकृष्य च स्मयन् ॥ १३३ ॥
विन्यस्य हस्तौ वनिताद्वयांसे गायन्समस्ताभरणः प्रसन्न दृक् ।
ननर्त चानन्दसमृद्धगात्रो मुनीन्द्रगीतश्च सकालवेलम् ॥ १३४ ॥

तादृशं शिवं ध्यात्वा जन्मकोटिशतेष्वपि । न दुःखं जायते तस्य सदा हर्षश्च जायते

अथ स्तुतो मुनिवरैर्नारीं कृत्वा हृदि ततः ।
अथ सा पार्वती तुष्टा देवं प्राह पिनाकिनम् ॥ १३६ ॥

पार्वत्युवाच ।

किमित्येतादृशं भावमास्थाय त्वमिहागतः ।
नारीं कृत्वा तथा विष्णुं किं प्रकृत्या न चागतौ ॥ १३७ ॥
शिवः प्राह व्रते चात्र ह्यतिथिर्भोजनं शुभम् ।
जाने सिद्धिमयो येषां विषादो नाभिजायते ॥ १३८ ॥
जाते विषादे तु व्रतमसम्यगिति निश्चयः ।
सोमधाराः समायान्ति यावन्तोऽब्दशतानि तु ॥ १३९ ॥

न्ति मत्पुरे देवि सर्वभोगसमन्वितः । सभार्यपुत्रबन्धुश्च वेदोक्तायुष्यजीवितः ।
पश्चाद्वाराणसीं गत्वा मृतो मुक्तिमवाप्स्यति ।

शम्भुरुवाच ।

देवे स्थिते तत्रमुनयस्त्रिःप्रदक्षिणम् । कृत्वा पञ्चनमस्कारान्पुनःकृत्वा प्रदक्षिणम्
पुनश्च दण्डवद् भूत्वा विसृष्टा निर्ययुस्ततः ।
अथ शोणः शोभिताङ्गीं भार्यामाप ह्यनिन्दिताम् ॥ १४२ ॥
च भारते वर्षे धर्मेणापालयद्द्विजः । मानुषानखिलान्भोगान्बुभुजे शिवभक्तिमान्
देवार्चनपरो नित्यंब्राह्मणपूजकः । नित्यदाता नित्ययाजी नित्यश्रोता पुराणकम्
त गतवाँल्लोकं शङ्करस्य विभोः शुभम् । नामकीर्तनमाहात्म्यं प्रसङ्गात्परिकीर्तितम्
सर्वपापघ्नंभक्तानां च तथा नृप ! । सर्वकल्याणदं नित्यं सुभार्याराज्यदं शिवम्
शिवभक्तिप्रदं गोप्यं यस्य कस्यापि नेरयेत् ॥ १४७ ॥
श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे शिवनाममाहात्म्ये
द्वादशोत्तरशततमोऽध्यायः ॥ ११२ ॥

---

# त्रयोदशाधिकशततमोऽध्यायः

## पुराणश्रवणमाहात्म्यम् ।

श्रीराम उवाच ।

ते विमानस्थानानारूपधराः शुभाः । सर्वकामफलोपेताः सुभार्याःशतयोषितः
नारीभिः पूज्यमानाः पदे पदे । गायन्ति विंशतिर्योषा रूपलावण्यकोमलाः ॥
हिनी चैका चामरासक्तबाहवः । तालवृन्तद्वयं नार्योवीजयन्ति प्रगृह्य वै ॥३॥
ाङ्कमध्येऽस्या उपधानं तथापरः । एकस्याः करयोर्दम्नः स्तावकानेकसंयुतः
परीहासहृतोत्फुल्लमुखाम्बुजः । एकैकत्र विमाने तु दृश्यते चन्द्रदीधितिः ॥

स्त्रीशानेषु विमानेषु दृश्यते सेश्वरः शुभः । एते किं पुण्यकर्तारो विष्णुमायाऽथवा मुने

शम्भुरुवाच ।

एते हि ब्राह्मणाः पुण्या गृहस्थाश्रमवासिनः । येषामेव च सुग्रामो दत्तो दशरथेन ते ॥
अधिवासानां न तेषां तु कदाचिद्भयमन्मतिः । यथेह सुखिनः सर्वे वयं चान्योपजीविन
अस्मानेवानुजीवन्ति शत्रुघ्नोमनुजा इह । येन पुण्येन च वयं सर्वे कामानुमोदिनः ॥९
सुखीकृतोपचाराश्च सर्वे राज्यसुखान्विताः । जरामरणहीनाश्च युवानः सर्वदैव हि ।

विचार्यैव द्विजाः सर्वे वसिष्ठस्याश्रमं ययुः ।
आगतानथ सम्पूज्य वसिष्ठो वाक्यमुक्तवान् ॥ ११ ॥
किमर्थमागता यूयं शीघ्रं ब्रूत द्विजोत्तमाः ॥ १२ ॥

द्विजा ऊचुः ।

वयमिच्छामहे सर्वे सर्वसम्पत्समन्विते । विमाने कामगे रोढुं तत्सम्पादय नो गुरो

तत्तेषां चिन्तितं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ।
पुराणं सर्वदा विप्राः श्रोतव्यं पापनाशनम् ॥ १४ ॥

धर्मश्चार्थश्च कामश्च मोक्षस्तत्रैव दृश्यते । तथेत्युक्त्वाऽथ मुनयः पुराणकुशलं मुनिम्
जग्मुरङ्गिरसं श्रेष्ठं सर्वशास्त्रविशारदम् । सर्वागमपुराणज्ञं सदासत्कर्मचारिणम् ॥१६॥
इदमूचुर्नमस्कृत्य वयं सफलजीविनः । कृतकृत्या वयं ब्रह्मन्साक्षाद्दृष्टोऽसि यन्मुने ।

अङ्गिरा उवाच ।

यदर्थमागता यूयं तत्कार्यं करवाण्यहम् । पुराणं श्रोतुकामास्तु यूयमत्र समागताः ॥
कीर्तयिष्ये विधानं वः समस्ताघविनाशनम् । सर्वज्ञानप्रदं दिव्यं तत्त्वविज्ञानसम्भवम्
शिवभक्तिप्रदं हृद्यं विष्णुभक्तिप्रदं शुभम् । विचित्रस्वर्गतिप्राप्तिज्ञानदं रमणीप्रदम् ॥
नानाविधशुभज्ञानं रतितन्त्रप्रकाशकम् । भुक्तिमुक्तिप्रधानं च विधिदर्शनदीपकम् ॥२१
विचित्रभक्तिकथनं भक्तिसाहसकीर्तनम् । व्रतप्रतिष्ठादानादिभस्मपूजाविधिप्रदम् ॥२२
पुराणं पाद्ममुदितं महापद्मोपनिर्वृतम् । महेश्वरेण कथितं प्रमथाकृतिवर्णनम् ॥ २३ ॥
एतदन्यत्र कथितं पुराणे पाद्म एव तु । दिलीपेन पुरा पृष्टो वसिष्ठः प्रोक्तवानिदम् ॥

तच्छृणुध्वं मुनिवरा ज्ञानं सत्रं भविष्यति। अथ तद्वचनाद्विप्राः पुराणश्रवणेरताः ॥
कथं श्रोतव्यमधुना किं कृत्वेत्यब्रुवन्मुनिम्। सोऽपि सर्वं समाचष्ट शृणुध्वं सनातनम्
नमस्कृत्य पुराणज्ञं दद्याच्चार्घासनं ततः। निषीद तत्र चेत्युक्त्वा गन्धपुष्पैः समर्चयेत्

आत्मयोग्यं च ताम्बूलमधिकं वा समर्पयेत्।
ब्रूहि पुण्यकथां ब्रह्मन्पौराणिकीमितीरयेत् ॥ २८ ॥

न तद्‌पासनमारुह्य नोच्चासनमथापि वा। नीचासनो वै शृणुयाद्धर्मकामार्थसिद्धये
शृणुयात्युक्त्वा पुराणज्ञ इमं मन्त्रमुदीरयेत्। नमो हरिं हरमथो गणेशं भारतीमतः ॥
इष्टदेवं नमस्कृत्य पुराणं वक्तुमर्हति। अर्द्धयामं प्रतिदिनं यदि वापीच्छया भवेत् ॥ ३१
एवं पाठसमाप्तिं च श्रुत्वा कृत्यं समाचरेत्। श्रोतुश्च तूष्णीं मननं तूष्णीं श्रवणमेव वा

अन्यथा भारती क्रुध्येत्तत्क्रोधान्मूकतां भवेत्।
तस्मात्पुराणश्रोत्रा च ताम्बूलादिसमर्पणम् ॥ ३३ ॥

वक्तुश्च जीविका कार्या स्वसामर्थ्यानुसारतः। पुराणप्रक्रमेद्देयं सचेलोत्तुगमनीयम् ॥
सूक्ष्माम्बरमथो वापि वस्त्रद्वितयमर्पयेत्। आसनं तु महच्चित्रं रम्यमूर्जस्वलं मृदु ॥
सुवर्णं वा तथा दद्याद्गोभूगेहादिकं तथा। एतत्समस्तं विप्रेन्द्रा दक्षिणामूर्तिनापुरा

शङ्करेण मुनीनां हि भाषितं च दिवौकसाम्।
अथ ते मुनयः सर्वे तं प्रणम्यासनस्थितम् ॥ ३७ ॥

पृथक्पृथक्चताम्बूलं दत्त्वा शुश्रुवुः स्थिताः। तेनापि कथितं सर्वंपुराणं सर्वसम्पदम्

उपान्त्याध्यायपर्यन्तं श्रुतवन्तो द्विजोत्तमाः ॥ ३८ ॥

दिलीप उवाच।

गमनेन विमानेन सर्वसम्पत्समृद्धिना। सर्वतः सुखयुक्तेन पुण्यस्थानमुपस्थितम् ॥

वसिष्ठ उवाच।

नालं पृष्टं त्वया राजन्नितोऽप्यतिशयान्तरैः। क्रीडमाना भविष्यन्ति येन तत्पुण्यमुच्यते

सुधा धवलितं कृत्वा शिववेश्मसमन्ततः।
स्त्रियो रूपविलासाढ्याः सर्वालङ्कारभूषिताः ॥ ४१ ॥

नानासुगीतकुशला नानानृत्यविशारदाः । चतस्रोऽष्टौ षडथवा मर्दलध्वनिकाः स्त्रियः

वंशिन्यौ द्वे आवजिक्यौ कोणिकाधमने उभे ।

लासिक्यस्तु चतस्रः स्युः सन्त्वेकाथ गायिका ॥ ४३ ॥

एको द्वे वा सुगीतज्ञेऽमुखरे हि प्रकीर्तिते । कोणवाद्यकृते द्वे ॥ तूष्णीं भूताः षडेव वा

सर्वा रूपविलासिन्यः सर्वाश्चापतितस्तनाः । रतितन्त्राधिकुशलास्तत एवाधिशङ्किताः

सुसूक्ष्मवस्त्रवेषाश्च विद्युच्चञ्चलदृष्टयः । एतादृशीभिर्योषाभिर्येन नृत्यं हि कारितम् ॥

एकस्मिन्दिवसे राजन्वत्सरान्तविमानगः । शतस्त्रीवीक्षितमुखो युवा बहुभिरर्चितः

आनन्दपोषसम्पूर्णः क्रोधेर्ष्यादिविवर्जितः । पञ्चगन्धविलिप्ताङ्गः स चन्द्राहितलाननः ॥

सूर्योपमस्तु योषाश्च सर्वास्तादृशमान्विताः । सद्यो विकसितामोदि पारिजातकृतस्रजः

सर्वा विकसितारोहिरक्तसन्धिकृतस्रजः ।

धम्मिल्ले वक्षसि तथा विभ्रत्यःसुस्मिताधराः ॥ ५० ॥

वत्स्यैतादृशाभिस्तु नृत्यगीतमनुमोदितः । एवं विमानगो भूत्वाऽउषित्वा कालमक्षयम्

पश्चाज्जायेत नृपतिरेवं कृत्वा पुनस्तथा । राज्यं स्वर्गफलं भूत्वा शिवमतो भविष्यति

शम्भुरूपाच्च ।

दिलीपाय वसिष्ठोक्तं मुनिभ्योऽवदद्गिरा । ते तथा कृतवन्तश्च तीर्थत्रिफलमुमापतेः ॥

श्रुत्वा पुराणं पाद्मं च समग्रं सुमित्रोऽभवन् ।

॥ एवं ब्राह्मणा राम विमानवरमान्विताः ॥ ५५ ॥

दृश्यन्ते मे च सुखिनः सदा मुदितमानसाः । एतत्सर्वमाख्यातं पुराणेषु विनिश्चितम्

इतः परं च किं भूयः श्रोतुमिच्छसि राघव ॥ ५६ ॥

इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे

त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

# चतुर्दशाधिकशततमोऽध्यायः

## गौतमगृहवृत्तान्तवर्णनम् ।

राम उवाच ।

क एष दृश्यते व्योम्नि सर्वाभरणभूषितः । विमानस्थो महादीप्तमध्याह्नार्क इवापरः ॥
प्रेक्ष्यः सर्वमर्त्यानां तस्याङ्के चारुहासिनी । अपरा श्रीरिवाभांस्तथापश्च सुयोषितः
यन्ति मधुरां गीतिं सुभ्रूभङ्गनिरीक्षणैः । मन्दस्मितैः करतलशब्दास्फोटिकयास्तथा
विशुगलकृतैर्गीतैरन्योऽन्यकरताडनैः । अन्योन्यमुखमालोक्य प्रलोभैर्गीतपूर्वकैः ॥४॥
डितास्ते महायोगी पद्मकिञ्जल्कसन्निभः । एवं चरितपुण्योऽसौ कोऽप्येतद्वदस्व मे

शम्भुरुवाच ।

र विप्रः पुरा राम सर्वसम्पत्समन्वितः । नानाविधसुखोपेतो भार्यापोषणतत्परः ॥
ष्टो दानहीनश्च देवतार्चनवर्जितः । पञ्चयज्ञविहीनश्च स्वाध्यायपरिवर्जितः ॥ ७ ॥
मध्याह्नसायाह्नभोजनप्रवणोऽशुचिः । कदाचिद्गमद्गेहं गौतमस्य महात्मनः ॥
त्र्यम्बकस्य गिरौ पुण्ये नानामुनिगणाश्रिते ।
तत्रापि शोभिनगृहं स्फटिकस्तम्भकल्पितम् ॥ ९ ॥
अगुरुद्रवकस्तूरीचन्द्रकुङ्कुमचर्चिता । भित्तिर्यस्य च सन्तानकुसुमामोदसौष्ठवम् ॥ १०
कस्तूरिकापुष्परसमुत्सेवितभूतलम् । सूक्ष्मसुश्वेतविविधवितानपरिशोभितम् ॥ ११॥
प्राङ्गणं शोभितमहाकदलीपूगशोभितम् । समीपसरसीजातमञ्जुकूजन्मधुव्रतम् ॥ १२॥
पाटीरतरुसम्भूतगन्धपूरितदिङ्मुखम् । शिक्षागीतकृताह्लादगीतपूरितदिङ्मुखम् ॥१३॥
निदाघजनितातापनाशनाय विनिर्मितम् । कदलीदलसञ्छादिपावकाकल्पितच्छदम् ॥
पाटीरतरुसुस्निग्धसान्द्रद्वारकपाटकम् । सौगन्धिकमहामोदिकल्पितान्तरभित्तिकम् ॥
ईशानभागसुभगरतिकल्पितवेदिकम् । हाटकाकल्पितपदं विचित्रवेदिकायुतम् ॥१६॥
सुस्निग्धनिविडच्छायं वटमूलोपकल्पितम् । प्रसूनकदलीखण्डसरोभिः प्रान्तशोभितम्

महावटाग्रसँल्लग्नतुषारितपयोधरम् । नाकोपवनसम्पन्नविचित्रारामशोभितम् ॥
वापीकूपतडागाद्यमनेकवनशोभितम् । मन्दमन्दं ववौ वायुर्यत्र गेहे सुखप्रदः ॥
वादिन्यश्चारुसर्वाङ्ग्यो वाद्यानि स्वरसम्पदः ।
वीणां वेणुं त्रिवेणुं च वादयन्ति वराङ्गनाः ॥ २० ॥
तौर्यत्रिककृतो नार्यश्चतुर्दिक्षु तयोर्दूर्ध्वतः । सुवर्णादिकपात्रेषु वटका भस्मनः
वासिताः सर्वगन्धैश्च सुधूपैरपि धूपिताः । कुशग्रथितसङ्घाश्च अक्षमालाश्च कोटि
कृष्णाजिनसहस्राणि बहिः प्रान्ते स्थितानि च । एतादृशे गृहवरे देववन्द्यो मुनि
कर्पूरादिश्च संस्थाप्य चतुर्दिक्षु मुनीश्वरः । पाटीरपीठेकर्पूरसिंहासनमकल्पयत् ।
सूक्ष्मं श्वेतञ्च सुस्निग्धमावृत्तं घनसारकैः ।
सुगन्धवासितजलैः स्नाप्य क्षीरेण शङ्करम् ॥ २५ ॥
अन्यैश्च वैदिकैर्मन्त्रैः स्नापयित्वा सदाशिवम् ।
दारुचन्द्रोपपीठे तु वस्त्रपीठं निधाय च ॥ २६ ॥
पात्रिकामग्रतः स्थाप्य स्थापयित्वाद्लेप्यमुन् ।
एकस्मिन्नक्षताःपात्रे ह्यन्यस्मिन्सतिलाक्षताः ॥ २७ ॥
पञ्चगन्धकमेकस्मिन्नन्यस्मिन्नष्टगन्धकम् । काश्मीरं मृगनाभिं ॥ कर्पूरं चन्दनं
पात्रेष्वन्येषु विन्यस्य पूजास्थाने प्रकल्प्य च । नानावरणमार्गेण पूजा तत्र विधी
लिङ्गमध्ये स्थितो देवः पञ्चवक्त्रः सदाशिवः । तस्यप्रावरणंलिङ्गं शक्तिस्तस्यविधी
शक्तेरावरणं विष्णुर्विष्णोरावरणं विधिः । ब्रह्मप्रावरणं चन्द्रस्तस्य सूर्यस्ततः भु
दिग्देवतास्तुनद्गुमिस्तासामावरणं दिशः । दिशामावरणं शम्भुस्तस्य चावरणं गुणा
दशाप्रावरणंहित्वचिन्त्यलिङ्गार्चनं शुभम् । केचाश्चिन्मनमेनस्त्यादश प्रावरणान्तरम्
विद्यावरणमाख्यातं तनुमावरणंस्मृतम् । विष्णुरावरणं तस्य विष्णोश्चावरणं विधि
ब्रह्मप्रावरणं चन्द्रस्तस्य भानुरथावृतिः । भानोरावरणं वेधा इति चोडावृतिस्मृताः
विधि विना समाख्यातं पञ्चावरणमुत्तमम् । शशाङ्कविष्णुशक्तीनामेतदावरणत्रयम्
मविचकावरणं प्रोक्तमेकावरणमुत्तमम् । अथवा लोकपालास्युरावृतिःसोमपूर्वं

अनावरणमथवा पूजनं शस्यते शिवे । पत्रिकाण्डदलेष्वेव स्थितद्रव्यैर्यजेच्छिवम् ॥ ३८
पत्रिकालक्षणं वक्ष्ये सर्वकर्मोपयोगि च । स्वर्णेन राजतेनाथ ताम्रेणाथ प्रकल्पितम् ॥
मुक्ताशुक्तिनिभं कुर्यात्पत्रिकाण्डदलं शुभम् । पद्मपत्रसमानाष्टकोणाकारं प्रकल्पयेत् ॥
पलमात्रं ततः शस्तं निर्वृतं विस्तृतं पद्मम् । अस्थूलमध्यमुपरि पद्माकृति दलाष्टकम् ॥
अथवा शक्तिमार्गेण पञ्चपत्रं प्रकल्पयेत् । त्रिपत्रमथवा कुर्याच्छक्तिभावेन तेन च ॥ ४२
यथास्याच्छोभनं पात्रं तथाकुर्याद्विचक्षणः । शक्त्यान्तरितरुद्राक्षैः कल्पिताष्टशतैःशुभा
मालोपवीतं त्रिंशत्या अष्टकेन प्रकल्पितम् । प्रगण्डयोरथैकैकं बद्ध्वा [illegible] विमकोष्ठयोः
शिरस्येका धृता तेन कण्ठे च परमर्षिणा ।
रुद्राक्षैः स्फटिकैः रत्नै.कल्पिता ह्यक्षमालिका ॥ ४५ ॥
व्याघ्रचर्मासनं कृत्वा पद्मासन गतो मुनिः ।
आवाहनासनं चार्घ्यं पाद्यं वाऽऽचमनीयकम् ॥ ४६ ॥
निर्वर्त्यगङ्गासलिलैः स्नापयामास शङ्करम् । अष्टगन्धकसंयुक्तैः पुष्पैर्वकुलपाटलैः ॥
स्वर्णभाण्डस्थितैर्वस्त्रशोधितैर्वासितैर्द्रुतम् । क्षारे ताम्रकटाहश्च प्रयन्धद्रोणिमाशुभम्
गोश्रृङ्गेण विषाणेन गवयस्य तथाक्वचित् । दक्षिणावर्तशङ्खेन रत्नपात्रैरथापि वा ॥
स्वर्णैर्वा राजतैर्वापिताम्रैःकांस्यैरथापिवा । स्वर्णैश्च सूक्ष्मकलशैःस्नापयामासचेच्छया
अथवा मृण्मयैः कुर्यात्पद्मपत्रैरथापि वा ।
पालाशैश्चूतजम्ब्वाद्यैः पात्रैः संस्नापयेद्विभुम् ॥ ५१ ॥
स्नानानामथ सर्वेषां धारास्नानं विशिष्यते । नमस्तेत्यादिमन्त्रेण शतरुद्रियसंज्ञिना ॥
चित्याद्यनुवाकेन शान्तिरूपेणचेश्वरम् । आवृत्य च यथाशक्ति पश्चादङ्गादिविन्यसेत्
ततश्च शोभनैः पुष्पैः पत्रैर्बिल्वैः समर्चयेत् । तुलसीमाधवदलैः कह्लारैश्च महोत्पलैः ॥
नीलोत्पलैरुत्पलैश्च शोणैश्च करवीरकैः । कर्णिकारैः सिताम्भोजैरपराजितया तथा ॥
कैलाक्षतैरक्षतैश्च श्रीपत्रैस्तिलमिश्रकैः । एवं महेशमीशानं पूजयामास गौतमः ॥ ५६ ॥
पूगागरुकस्तूरीसर्जागरुकचन्दनैः । अन्यैश्च धूपयामास षोडशाय प्रदीपिकाः ॥ ५७ ॥
पूर्णवर्त्तिसंयुक्तादीपयन्त्रोपरिस्थिताः । निवेदितं महेशाय अथ नैवेद्यमुत्तमम् ॥ ५८ ॥

सुपक्वशालिपिष्टान्नं भक्ष्यं लेह्यं च चोष्यकम् । मधुराद्दिसमोपेतं पञ्चभक्ष्यसमन्वितम्
अनेकपक्वशाकाढ्यमनेकव्यञ्जनमिश्रितम् । पानं विंशतिसंयुक्तं द्राक्षारम्भाफलान्वितम् ॥
सहकारफलैर्धान्यैर्नागरङ्गफलाक्षतैः । शर्करागुडसंयुक्तैराज्यपात्रसमन्वितम् ॥ ६१ ॥
सूपाद्यकादिसंयुक्तं युक्तं मूलफलादिना । यथासम्भवसंयुक्तैरन्यैरप्युपकल्पितम् ॥६२॥
आम्रपुष्पसमोपेतं नैवेद्यं प्रददौ मुनिः । सौवर्णपात्रिकान्यस्तनीराजनसहस्रकम् ॥६३॥
सोपहारायदेवाय दत्त्वा चैव नमस्य च । पूगखण्डानथो धूम्रान्यथाणि क्षालितानि च
पृष्ठाग्राणि सुवर्णैस्तच्छादनाकृतिकानि च । घनसारककूर्णं च न्यस्तपत्त्रत्रयं शुभम् ॥
सौवर्णपात्रविन्यस्तमिदं ताम्बूलमीश्वरे । अथ प्रदक्षिणं कृत्वा नमस्कारानन्तरम् ॥

अप्सरोवरास्ततः प्राप्तास्तन्त्रीवीण्यादिधारिकाः ।
विचित्रवाद्यवादिन्यः सम्प्राप्ता मुनिसन्निधिम् ॥ ६७ ॥

क्षुद्रतालयुगं गृह्य स्वयं गातुं प्रचक्रमे । गौतमे गातुमुद्युक्ते तानं कुर्युस्त्वङ्गनाः ॥ ६८॥
मन्दमन्दं च वाद्यानि वादयन्ति तथा पराः । मधुरं गायति मुनौ स्वरामूर्तिभृतस्तया
प्रानृत्यन्त महेशाग्रे तदद्भुतमिवाभवत् । एतस्मिन्नन्तरे प्राप्तो भगवान्नारदो मुनिः ॥

तमागतं गौतमोऽपि सम्पूज्य प्रणिपत्य च ।

आहचैनं कृतार्थोऽस्मि न च कश्चिन्मया समः । तवागमनकृत्यं किं कुत आगमनं तथा

श्रीनारद उवाच ।

पातालादागतोऽस्मीह श्रुत्वा वै बाणमन्दिरे ।
आयास्यन्ति महात्मानो बाणशुक्रादयो गृहम् ॥ ७२ ॥

अथ क्षणादभ्यगाच्च बाणः परपुरञ्जयः । विंशत्यक्षौहिणीयुक्तो गजमारुह्य सोऽसुरः
अपरं हि गजं शुक्रः प्रह्लादो रथमुत्तमम् । वृषपर्वा रथवरं बलिस्तुरगमुत्तमम् ॥ ७४ ॥

आगतानथ तान्सर्वानाज्ञाय स तु गौतमः ।
सशिष्यो निर्जगामाथ ह्यादायार्घ्यादिकं तथा ॥ ७५ ॥
गौतमं चापि ते वीक्ष्यावरुह्य च गजादिकात् ।
नमश्चक्रुस्ते दैत्यास्तं नमस्कृत्य भार्गवम् ॥ ७६ ॥

आलिङ्ग्य राक्षसान्सर्वान्पूजयित्वा यथाविधि। सेनाया.सन्निवेशं च चकार मुनिपुङ्गवः
पादौ प्रक्षाल्य शुक्रस्य जलं मूर्ध्नि धृतं तथा। विचित्रफलसंयुक्तं दत्तवानर्हणं मुनिः ॥
वापीतडागसरसीस्नानपूर्वंकृतक्रियाः। सङ्गमेवर्तमाने तु गौतमस्याश्रमे शुभे ॥ ७९ ॥
तद्गेहं तु प्रविश्याथ राक्षसास्सपुरोहिताः। देवपूजाप्रपत्तिं च चक्रुः सर्वे द्विजालये ॥
स्वयं प्रकल्पितायां च वेद्यां शुक्रोऽयजच्छिवम्।
तस्यैव वाममार्गे तु प्रह्लादोऽयजदच्युतम् ॥ ८१ ॥
सोमं च बलिरप्येवमन्ये चासुरपुङ्गवाः। अथ बाणोऽजयद्देवमेकमेव त्रियम्बकम् ॥
शुक्रोऽपि भगवन्तं तमुमानाथमपूजयत्। गौतमोऽप्यथमध्याह्ने पूजयामास शङ्करम् ॥
सर्वे शुक्लाम्बरधरा भस्मोद्धूलितविग्रहाः।
सितेन भस्मना कृत्वा सर्वस्थाने त्रिपुण्ड्रकम् ॥ ८४ ॥
नत्वा तु भार्गवं सर्वे भूतशुद्धिं प्रचक्रमुः। हृत्पद्ममध्ये सुषिरं तत्रैव भूतपञ्चकम् ॥८५॥
तेषां मध्ये महाकाशमाकाशे निर्मलामलम्। तन्मध्ये च महेशानं ध्यायेद्दीप्तिमयं शुभम्
अज्ञानसंयुतं भूतं शमलं सर्वसङ्कृतम्। तद्देहमाकाशदीपे प्रदहेज्ज्ञानवह्निना ॥ ८७ ॥
माकाशस्यावृतं वाहं दग्ध्वाकाशमथो दहेत्। दग्ध्वाकाशमथो वायुमभिभूतं तदादहेत्
मभूतं वतनो दग्ध्वा पृथिवीभूतमेव च। तदाश्रितान्गुणान्दग्ध्वा ततो देहं प्रदाहयेत्
एवं संदग्धभूतानि देहो तज्ज्ञानवह्निना। शिखामध्यस्थितं विष्णुमानन्दरसनिर्भरम् ॥
त्पन्नचन्द्रकिरणसङ्काशकिरणं शिवम्। शिवाङ्गोत्पन्नकिरणैरमृतद्रवसंयुतैः ॥९१॥
सुशीतला ततो ज्वाला प्रशान्ता चन्द्ररश्मिवत्।
प्रसारितसुधाधाराभिः सान्द्रीभूतश्च सम्प्लवः ॥
क्रमेण प्लावितं भूतग्रामं सञ्चिन्तयेत्परम् ॥ ९२ ॥
इत्थं कृत्वा भूतशुद्धिं क्रियार्हो मर्त्यः शुद्धो जायते शुद्ध एव।
पूजां कर्तुं जाप्यकर्माऽपि पश्चाद्देवध्याने ब्रह्महत्यादि हानिः ॥ ९३ ॥
एवं ध्यात्वा चन्द्रदीप्तिप्रकाशं ध्यानेनारोप्याशु लिङ्गे शिवस्य।
सदाशिवं दीपमध्ये विचिन्त्य पञ्चाक्षरेणार्चनमव्ययं [redacted] ॥ ९४ ॥

आवाहनादीनुपचारांस्तथाऽपि कृत्वा स्नानं पूर्ववच्छङ्करस्य ।
उदुम्बरं राजतं स्वर्णपीठं वस्त्रादिच्छन्नं सर्वमेवेद पीठम् ॥ ९५ ॥
अन्ते कृत्वा बुद्बुदानाञ्च वृष्टिं पीठे पीठे नागमेकं पुरस्तात् ।
कुर्यात्पीठे चोद्र्ध्वके नागयुग्मं देवाभ्याशे दक्षिणे वामतश्च ॥ ९६ ॥
जपापुष्पं नागमध्ये निधाय मध्ये वस्त्रं द्वादशप्रातिगुण्ये ।
सुश्वेतेन तस्य मध्ये महेशं लिङ्गाकारं पीठयुक्तं प्रपूज्यम् ॥ [redacted] ॥
एवं कृत्वा बाणमुख्यादिलीशा दत्त्वा दत्त्वा पञ्चगन्धाष्टगन्धम् ।
पुष्पैः पत्रैः श्रीतिलैरक्षतैश्च तिलोन्मिश्रैः केवलैश्च प्रपूज्य ॥ ९८ ॥
धूपं दत्त्वा विधिवत्सम्प्रयुक्तं दीपं दत्त्वा चोक्तमेवोपहारम् ।
पूजाशेषं तं समाप्याथ सर्वे गीतं नृत्यं तत्र तत्रापि चक्रुः ॥ ९९ ॥
अथास्मिन्नन्तरे गौतमस्य भ्रातः शिष्यः शङ्करात्मेति नाम्ना ॥ १०० ॥
उन्मत्तवेषो दिग्वासा अनेकाकृतिमाश्रितः ।
क्वचिद् द्विजातिप्रवरः क्वचिच्चाण्डालसन्निभः ॥ १०१ ॥
क्वचिच्छूद्रसमो योगी तापसः क्वचिदच्युतः ।
गर्जत्युत्पतते चैव नृत्यति स्तौति गायति ॥ १०२ ॥
रौदिति शृणुते स्वनं पतत्युत्तिष्ठति क्वचित् । शिवज्ञानैकसम्पन्नः परमानन्दनिर्भरः ॥
स कदाचित् भोजनवेलायां गौतमस्याश्रमं ययौ ।
बुभुजे गुरुणा साकं क्वचिदुच्छिष्टमेव च ॥ १०४ ॥
क्वचिच्च क्रीडते तत्पार्श्वे तूष्णीमेवास्यगात्क्वचित् ।
दत्तं गृहीत्वैव गुरोः स्वयमेवाभुनक् क्वचित् ॥ १०५ ॥
क्वचिद्गृहान्तरे भूत्वा क्वचित्कुड्यान्तरेऽस्नात् । सर्वदा तं गुरुर्दृष्ट्वा करमालम्ब्य मन्दिरम्
प्रवेश्य स्वीयपीठे समुपवेश्याभ्यमोजयत् । स्वयं तदस्य पात्रेण बुभुजे गौतमो मुनि
तस्य चित्तं परिज्ञातुं कदाचिदथ सुन्दरी ।
अहल्या शिष्यमाहूय मुहुर्भोज्युक्त्याऽथ सा शुभा ॥ १०८ ॥

सौवर्णे भाजने चान्नंनिधाय चषकान्तरे । पानादिकमथो दत्त्वाप्येकस्मिन्पावकं पुनः
निधायाङ्गारनिचयंकण्टकानांचयंपरे । निधायभुङ्क्ष्व भुङ्क्ष्वेति स चापि बुभुजेमुनिः
यथा पपौहि पानीयं तथा वह्निमपि द्विजः । कण्टकानपिभुक्त्वा स यथा पूर्वमतिष्ठत
पुराहि मुनिकन्याभिराहूतो भोजनाय च । दिने दिने तन्प्रदत्तं लोष्ठमम्बु च गोमयम्

कर्दमं काष्ठदण्डं च भुक्त्वा प्रीत्याऽथ हर्षितः ।

एतादृशो मुनिरसौ चण्डालसदृशाकृतिः ॥ ११३ ॥

सुजीर्णोपानहौहस्ते गृहीत्वा तु तथाकरे । अन्त्यजोचितभाषाभिर्वपर्षाणमभ्यगात्

यूपपर्वशयोर्मध्ये दिग्वासाः समतिष्ठत ।

यूपपर्षा समजात्वा पीडयित्वा शिरोऽच्छिनत् ॥ ११५ ॥

हते तस्मिन्द्विजश्रेष्ठे जगदेतच्चराचरम् । भतीव कलुषमभवत्तत्रत्या मुनयस्तथा ॥ ११६

गौतमस्य महाशोकः सञ्जातः सुमहात्मनः । निर्ययौ चक्षुषोर्वारिशोकं सन्दर्शयन्निव

गौतमः सर्वदैत्यानां सन्निधौ वाक्यमुक्तवान् ।

किमनेन कृतं पापं येन च्छिन्नमिदं शिरः ॥ ११८ ॥

मम प्राणाधिकस्येह सर्वदा शिवयोगिनः ।

ममापि मरणं सत्यं शिष्यरूपी यतो गुरुः ॥ ११९ ॥

ांनां धर्मयुक्तानां सर्वदाशिववर्तिनाम् । मरणं यत्र दृष्टं स्यात्तत्र मे मरणं ध्रुवम् ॥

शुक्र उवाच ।

नं सञ्जीवयिष्यामि मम गोत्रं शिवप्रियम् । किमसौ म्रियतेब्रह्मन्परय मे तपसोबलम्

इति वादिनि विप्रेन्द्रं गौतमोऽपि ममार ह ।

तस्मिन्मृतेऽथ शुक्रोऽपि प्राणांस्तत्याज योगतः ॥ १२२ ॥

थापि मृतिमाश्राय प्रह्लादाद्या दितेस्सुताः । सर्वे मृताः क्षणेनैव तदद्भुतमिवाभवत् ॥
स्मासीदथ बलं तस्य बाणस्य धीमतः । भहल्याशोकसन्तप्तादरोदीच्चैः पुनः पुनः
तेन महेशस्य पूजया पूजितो विभुः । वीरभद्रो महायोगी सर्वं दृष्ट्वा चुकोप ह
तो कष्टमहोकष्टं माहेशा बहवो मृताः । शिवं विज्ञापयिष्यामि तेनोक्तं करवाण्यहम्

े निश्चित्य मत्पादमन्वावलम्बयम्। नमस्कृत्य विरूपाक्षमिदं सर्वमयो
हरी स्थितो तत्र दृष्ट्वा प्राह शिवो वचः। मद्भक्तैः सादरं कर्मैतन्न दृष्टा व
या पश्यामि विष्णो युवामस्यामित्यथ। महेशो वृषभारूढ वायुना धूत
त्ययेन सुधैर्येण धृते छत्रेऽतिशोभने। सुवर्णदण्डे च नात्यग्र्ये धृते विभं

महेशानुमतिं लब्ध्वा हरिर्नागान्तके स्थितः।
आरक्तनीलच्छत्राभ्यां शुशुभे सन्ध्यर्कोस्तुभः॥ १३१॥

ानुमत्या ब्रह्मापि हंसारूढोऽभवत्तदा। इन्द्रगोपसमाकारच्छत्राभ्यां शुशुभे वि
दादि सर्वे देवास्स्वस्ववाहनसंयुताः। अथ ते निर्ययुः सर्वे नानावाद्यानुमोदिता
ादिकोटिगणाकीर्णा गौतमस्याश्रमं गताः। ब्रह्मविष्णुमहेशाना दृष्ट्वा तत्पमा
मभक्तं जीवयामास वामकोणनिरीक्षणात्। शङ्करो गौतमं प्राह तुष्टोऽहं ते वरं

गौतम उवाच।

दि प्रसन्नो देवेश यदि देयो वरो मम। त्वल्लिङ्गार्चनसामर्थ्यं नित्यमस्तु महेश्वर
तमेतन्मया देव श्रृणुष्वैतत्त्रिलोचन। मम शिष्यो महाभागो हेयादेयाद्विवर्जितः
क्षणीयं ममत्वेन न च पश्यति चक्षुषा। न च घ्राणेन घ्रातव्यं न दातव्यं न चेतरत्

इति बुद्ध्या तथा कुर्वन्न हि योगी महायशाः।
उन्मत्तविकृताकारः शङ्करात्मेति कीर्तितः॥ १३९॥

कश्चित्तं प्रतिक्षिप्यान्नवतं हिंसयेदिति। एतन्मेदीयतां देव एतेषामस्तित्वया॥१४०

श्रीभगवानुवाच।

ाकल्पमेतेजीवन्तुततोमुक्तिभजन्तु च। त्वयाकृतमिदं वेश्म विस्तृतं विहृतं शुभम्।

सिद्धामः क्षणमात्रं तु ततो यास्याम मन्दिरम्॥ १४२॥

गौतम उवाच।

योग्यं प्रार्थयामीश हार्दो दोषं न पश्यति। ब्रह्माचलम्यं देवेश! दीयतां यदि रोचते
येशो विष्णुमालोक्य गृहीत्वा तु करं हरेः। प्रहसन्मधुरामाह्मित्युवाच सदाशिवः
म्लानोदरोऽसि गोविन्द! देयं ते भोजनं किमु।

स्मयं प्रविश्य यदि वा स्वयं भुङ्क्ष्व स्वगेहवत् ॥ १४५ ॥
गच्छ वा पार्वतीगेहं या कुक्षिं पूरयिष्यति । इत्युक्त्वा तत्करालम्बीएकान्तमगमद्विभुः
मादिश्य नन्दिनं देवोद्वाराध्यक्षं यथोक्तवत् । गौतमं समुवाचाथमुत्तरंविष्णुभाषणम्

सदाशिव उवाच ।

सम्वाद्यानन्दं मर्धेयो भोक्तुकामा वयं मुने । इत्युक्त्वैकान्तमगमद्वासुदेवेन शङ्करः॥१४८
सुशय्यां समारुह्य शयितौ देवसत्तमौ ।
अन्योन्यं भाषणं कृत्वा प्रोत्तस्थतुरुभावपि ॥ १४९ ॥
गत्वा तटाकं गम्भीरं स्नापयन्तौ देवसत्तमौ । कराम्बुपानमन्योन्यं पृथक्कृत्वोभयत्रच
मुनयो राक्षसाश्चैव जलक्रीडां प्रचक्रिरे । अथ विष्णुर्महेशश्च जलपातानि शीघ्रतः ॥
चक्रतुः शङ्करः पद्मकिञ्जल्काञ्जलिना हरेः । अथाकिरन्मुखे तस्य पद्मोत्फुल्लविलोचने ॥
नेत्रे केशरसम्पातात्न्यमीलयत केशवः । अत्रान्तरे हरेः स्कन्धमारुरोह महेश्वरः ॥१५३॥
हर्युत्समाङ्कं बाहुभ्यां गृहीत्वा संन्यमज्जयत् ।
उन्मज्जयित्वा च पुनः पुनश्चापि पुनः पुनः ॥ १५४ ॥
पीडितः स हरिः सूक्ष्मं पातयामास शङ्करम् ।
अथ पादौ गृहीत्वा तु आचकर्ष च भ्रामयत् ॥ १५५ ॥
ताडयच्चरैर्वक्षः पातयामास चाच्युतम् । अथोत्थितो हरिस्तोयमादायाञ्जलिना ततः
अथाकिरदथो शम्भुमथ विष्णुमथो हरः । जलक्रीडैवमभवदथ वर्षिगणान्तरे ॥१५७॥
जलक्रीडासम्भ्रमेण विस्रस्तजटबन्धनाः । अथ सम्भ्रमतस्तेषामन्योन्यजटबन्धनम् ॥
इतरेतरबद्धासु जटासु च मुनीश्वराः । शक्तिमन्तोऽशक्तिमत आकर्षन्ति स्म सव्ययम् ॥
पातयन्तोऽन्यतश्चापि क्रोशतो रुदतस्तथा । एवं प्रवृत्ते तुमुले सम्भूते तोयकर्मणि ॥
आकाशे नारदो हृष्टो ननर्त च ननाद [illegible] । विपञ्ची नादयन्वाद्यं ललितां गीतिमुज्जगौ
सुगीत्या ललितायास्तु अगायन विधा दश । शुश्राव गीतं मधुरं शङ्करो लोकभावनः
स्वयं गातुं हि ललितं मन्दमन्दं प्रचक्रमे । स्वयं गायति देवेशे मिश्रा मङ्गलकैशिकी
नारदे नृत्यमाने [illegible] गायति स्वरभेदिनि । स्वरं ध्रुवं समादाय सर्वलक्षणसंयुतम् ॥

स्वधारामृतसंयुक्तं गानेनैवमधोऽजयत् । वासुदेवो मर्दलं च कराभ्यामिदमाहनत् ।
अवगाहंश्चतुर्वक्त्रंस्तुम्बुरुर्मुखरोऽवमौ । नानकागीतमाद्यास्तु तूष्णीं गातुं च वायुतः ॥
गायके मधुरं गीतं हनूमति कपीश्वरे । म्लानमम्लानममवस्तूश्शाःपुष्टास्तदाऽभवन् ॥१६७
स्वां स्वां गीतिमतः सर्वे तिरस्कृत्येव मूर्च्छिताः ।
तूष्णीं सर्वे समभवन्देवर्षिगणदानवाः ॥ १६८ ॥
एकः स हनुमान्गाता श्रोतारः सर्व एव ते । मध्याह्नकालविततै भोजनावसरे सति ॥
दुकूलयुगमाधत्त शृण्वन्गीतिं महेश्वरः । पीतवस्त्रद्वयं विष्णुरारक्तं चतुराननः ॥१७०॥
स्वस्वार्हाण्यथ सर्वेऽपि कृत्यं कृत्वाऽपि कालिकम् ।
स्वं स्वं वाहनमारुह्य निर्गताः सर्वदैवताः ॥१७१॥
गानप्रियो महेशस्तु जगाद प्लवगेश्वरम् । प्लवगस्त्वं मयारूढो निरशङ्कं वृषमारुह ॥
मम चाभिमुखो भूत्वा गायस्वाशेषगायनम् । अथाह कपिशार्दूलो भगवन्तं महेश्वरम् ॥
वृषमारोहसामर्थ्यं तव नान्यस्य विद्यते । तव वाहनमारुह्य पातकी स्यामहं विभो ! ॥
मामेवारुह देवेश ! विहगः शिववाहन ! ।
तव चाभिमुखं गानं करिष्यामि विलोकय ॥ १७५ ॥
अथेश्वरो हनूमन्तमारुरोह वृषं यथा । आरूढं शङ्करे देवे हनूमान्कम्पराशिरः ॥१७६॥
छित्वा स्वकं परावृत्य मुखं गायतिपूर्वधन् । शृण्वन्गीतिसुधां शम्भुर्गीतमस्य पुरं गतः
सर्वे चाप्यागतास्तत्र देवर्षिगणदानवाः । पूजिता गीतमेनाथ भोजनावसरे सति ॥
यच्चकृष्णदारसम्भूतं गृहोपकरणादिकम् । प्रक्षद्रममवत्सर्वं गायमाने हनूमति ॥
तस्मिन्गाने समस्तानां चित्तद्वितिरतिष्ठत ॥ १७९ ॥
द्विवार्दूलान्य पक्षाभिषन्दनः समस्तगात्राभरणोपपन्नः ।
प्रसन्नमूर्तिस्मितवक्त्रः समध्ये विन्यस्तमूर्धाञ्जलिभिः सुरैः स्तुतः ॥ १८०
शिरः कराभ्यां परिगृह्य शङ्करो हनूमतः पूर्वमुखं चकार ।
पश्चाच्चनार्थीजहनूमताञ्जली निधाय पादं त्वपरं मुखे च ॥ १८१ ॥
पादाङ्गुलीभ्यामथ नासिकां विभुः स्मेरैस्त जगाद च मन्दमन्दम् ।

स्कन्धे मुखे स्वंसतले च कण्ठे वक्षःस्थले च स्तनमध्यमे हृदि ॥ १९८ ॥
ततश्च कुक्षावथनाभिमण्डले ततो द्वितीय निदधाति चाञ्जलीं ।
शिरो गृहीत्वाऽवनमय्य शङ्करः पस्पर्श पृष्ठं चिबुकेन सध्वनि ॥ १८३ ॥
हारं च मुक्तापरिकल्पितं शिवा हनूमतः कण्ठगतं चकार ह ॥ १८४ ॥
विष्णुर्महेशानमिदं वचनमुक्तवान् । हनूमता समो नास्ति हरस्मब्रह्माण्डमण्डले
देवाधगम्यं हि पदं तव किल स्थितम् । सर्वोपनिषद्व्यक्तं त्वत्पदं कपिसर्वगुक्
यमादिसाधनैर्योगैर्नैक्षणं ते पदं स्थितम् । महायोगिहृदम्भोजे वलं त्वत्ढं हनूमति
वर्षकोटिसहस्रेषु तपः कृत्वा तु दुष्करम् । त्वद्रूपं नाभिजानन्ति सुतः पादं मुनीश्वराः
महोमाग्यं विचित्रं हि चपलो वानरो मृगः । धत्ते पादयुगं चाङ्के योगिहृपविन हरमम्
मया वर्षसहस्रं तु सहस्राब्जैस्तयाऽन्वहम् ।
भक्त्या सम्पूजितोऽपीश पादो नो दर्शितस्त्वया ॥ १९० ॥
लोके पादो हि सुमहाम्भम्भुर्नारायणप्रियः। हरिःप्रियस्तथाऽसमोऽमंताहृग्भाग्यमस्ति मे
सदाशिव उवाच ।
न त्वया सदृशो मह्यं प्रियोऽस्ति भगवन्हरे ! ।
पार्वती वा त्वया तुल्या न चान्यो विद्यते मम ॥ १९२ ॥
अथ देवाय महते गौतमः प्रणिपत्य च । व्यज्ञापयद्मेवारमग्रेवे हि करुणानिधे ! ॥
मध्याह्नोऽयं व्यतिक्रान्तो भुक्तिवेलाऽखिलस्य च ।
अथावाप्य महादेवो विष्णुना सहितो विभुः ॥
प्रविश्य गौतमगृहं भोजनायोपचक्रमे ॥ १९४ ॥
रत्नाङ्गुलीयैरथ नूपुराभ्यां दुकुलवन्धेन तडित्प्रकाऽच्चा ।
हारैरनेकैरथ कण्ठनिष्कयज्ञोपवीतोत्तरवाससा च ॥ १९५ ॥
विलम्बिवभ्रम्मविकुण्डलेन सुपुष्पिधम्मिल्लवरेण्य देवः ।
पञ्चाङ्गगन्धस्य विलेपनेन वाहङ्गदैः कङ्कणकाङ्गुलीयैः ॥ १९६ ॥
[...]र्थ विभूषितः शिवो निविष्ट उत्तमासने स्वसंमुखं हरिं तथान्यदेवाश्चवरासने ।

योन्यसंमुखौ स्थितौ हरीशौ देवसत्तमौ सुवर्णभाजनान्यथो ददौ स चापि
त्रिशत्प्रभेदभक्ष्यकं सुपायसं चतुर्विधं सुपक्वपाकजातकं शतद्वयं प्रकल्पितम्
कपक्वमिश्रकं शतत्रयं प्रकल्पितं शतं शतं तथा सुकन्दशाककं तथा मुनिः ॥
ादिसर्पिषान्वितं ददौ च पञ्चविंशति सुशर्करादिकं तथा सुचूतदाडिमादि
वाफलं तु गोस्तनीं सुखर्जुनागरङ्गकं जम्बूफलं प्रियालुकं विकङ्कतं फलं त

पयसादीनि चान्यानि द्रव्याण्यर्प्य यथाविधि ।
दत्त्वा चापोशनं विप्रो भुज्यतामिति चाब्रवीत् ॥ २०० ॥

ानेषु च सर्वेषु व्यजनं सूक्ष्मवल्कम् । गौतमः स्वयमादाय शिवविष्णू अवीजय
ह्वासमयो कर्तुमियेष परमेश्वरः । पश्य विष्णो हनूमन्तं कथं भुङ्क्ते स पान
रं पश्यति हरौ मण्डकं विष्णुभाजने । चिक्षेप मुनिसङ्घेषु पश्यत्स्वपि महे
मृते दत्तवांश्च स्वोच्छिष्टं पायसादिकम् । त्वदुच्छिष्टममोज्यं तु तवैव वचनाि
हं मम नैवेद्यं पत्रं पुष्पं फलं तथा । मत्तं निवेद्य सकलं कूप एव विनिक्षि

अभुक्ते त्वद्वचो नूनं भुक्ते चापि कृपा तव ॥ २०५ ॥

सदाशिव उवाच ।

तलिङ्गस्वयम्भूते चन्द्रकान्ते ह्यवस्थिते । चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षण

भुक्तिवेलेयमधुना तद्वैरस्यं कथान्तरात् ।
भुक्त्वा तु कथयिष्यामि निर्विशङ्कं विमुह्य तत् ॥ २०७ ॥
अथासौ जलसंस्कारं कृतवान्गौतमो मुनिः ॥ २०८ ॥
आरभ्य सुस्निग्धसुमृद्भगात्राननेकधार्पितसुशोभिताह्वान् ।
तडागतोयैः कृतर्वाजर्पितैर्विशोधितैस्तैः करवानपूरयन् ॥ २०९ ॥
नद्याः शैवलचैद्रिकी नवनदी सम्भाव्य सूक्ष्माम्बरैः ।
शुद्धैः स्वैनगरैरथोपरि घटाम्भोयेन पूर्णाङ्क्षिपेन् ॥
भित्त्वा नालकजातिमाल्यपूर्वं कङ्कोलकस्तूरिका-
चूर्णं चन्दनकर्पूरविमिश्रितं भाव्यो पुटाग्नौ क्षिपेत् ॥ २१० ॥

यामस्यापि पुनश्च वारिवसने नाशोध्य कुम्भेक्षिपे-
च्चन्द्रग्रन्थिमथो निधाय बकुलं क्षिप्त्वा तथा पाटलाम् ॥ २११ ॥
शेफालीस्तबकमथो जलं च तत्र विन्यस्य प्रथमत एव तोयशुद्धिम् ।
कृत्वाऽथो मृदुतरसूक्ष्मवस्त्रखण्डेनावेष्टेत्सृणिकमुखं च सूक्ष्मचन्द्रम् ॥२१२॥
अनातपप्रदेशे तु निधाय करकानथ । मन्दवातसमोपेते सूक्ष्मव्यजनवीजिते ॥ २१३ ॥
अथ उर्वीशसलिलैः सिञ्चयेत्सृणिकामपि ।
संस्कृताः स्यापतास्तत्र नरा नार्योऽथवा नृप ! ॥ २१४ ॥
तत्कन्या वा क्षालिताङ्गा धौतवस्त्राश्च वाससः । मधुपिङ्गलनिर्यासमरूग्रमगुरुद्वयम् ॥
बाहुमूले च कण्ठे च विलिप्यसान्द्रमेव च । मस्तकेऽप्यर्पकं न्यस्य पञ्चगन्धविलेपनम्
पुष्पनद्धसुकेशास्तु ताः शुभास्याः सुनिर्मला । एवमेवोचिता नार्ये आत्तकुङ्कुमविग्रहाः
युत्यवधारुसर्वाङ्गयो नितरां भूषणैरपि । एतादृग्वनिताभिर्वा नरैर्वाद्यापयेज्जलम् ॥
ऽपि प्रदानसमये सूक्ष्मवस्त्राल्पयेत्नम् । अथ वामकरे न्यस्य करकं तत्र पश्य हि ॥
रिकान्यस्तमुन्मुच्य ततस्तोयं प्रदापयेत् । एवं सन्कारयामास गौतमो भगवान्मुनिः
देशादिषु सर्वेषु भुक्तवत्सु महात्मसु । प्रक्षालिताह्यग्रिहस्तेषु गन्धोद्वर्तितपाणिषु ॥
पदासनसमासीने देवदेवे महेश्वरे । अथ नीवसमासीना देवाः सर्षिगणास्तथा ॥
मणिपात्रेषु संवेष्टय पूगखण्डान्सुधूपितान् । अकोणवर्तुलान्स्थूलानसूक्ष्मानह्रस्वानपि
सैलारचापि संशोध्य क्षिप्त्वा कर्पूरखण्डकम् । चूर्णं च शङ्कराय निवेदयति गौतमे
गृहाण देव ताम्बूलमित्युक्तवचनेमुनौ । कपे गृहाण ताम्बूलं प्रयच्छ ममखण्डकान् ॥
यथाव वानरो नास्ति मम शुद्धिर्महेश्वर । अनेकफलभुक्त्वाद्वानरस्तु शुचिःकथम् ॥

सदाशिव उवाच ।

महाक्याद्खिलंशुध्येन्महावाक्यादमृतं विषम् । महावाक्यादखिलावेदा महावाक्याद्देवतादयः
महावाक्याद्धर्मविज्ञानं महावाक्यान्मोक्ष उच्यते ।
पुराणान्यागमाश्चैव स्मृतयो मम वाक्यतः ॥ २२८ ॥
मतो गृहाण ताम्बूलं ममदयाःसुखण्डकान् । हरिर्वामकरेणादात्ताम्बूलं पूगखण्डकम्

ततःपात्राणि सङ्गृह्य ततः दण्डान्समर्पयत् । कर्पूरमप्रतोदत्तं गृहीत्वाऽमक्षयच्चि
देवे तुग्रततामूले पार्वती मन्दराचलात् । जया विजययोर्हस्तं गृहीत्वायान्मुनेर्गृ
देवपार्श्वे ततो नत्वा विनम्रवदनाऽभवत् । उन्नमय्यमुखं तस्या इदमाह त्रिलोचन
त्वदर्थं देवदेवेशि! अपराधःकृतो मया । यत्त्वां विहाय भुक्तं हि तथाऽन्यच्छृणु सुन्दरि
अथ स्वमन्दिरे स्थाप्य देवदेवविवर्जिते । सर्वबन्धविमुक्ते च महदेनो मयाकृतम्

क्षन्तुमर्हसि देवेशि ! त्यक्तकोपा विलोकय ।
न यभार्येममुक्ता सा अरुन्धत्या हि निर्ययौ ॥ २३५ ॥

निर्गच्छन्तीं मुनिर्भार्यया दण्डवत्प्रणनाम च । तदारभ्य महेशाय दण्डप्रणतिसंस्तुति
कुर्यादुवाच च शिवा गौतम ! त्वं किमिच्छसि ॥२३७॥

गौतम उवाच ।

कृतकृत्योऽस्मि देवेशि ! यदि देवो वरो मम । मन्मन्दिरे महाभागे भोक्तुमर्हसि साम्प्र

देव्युवाच ।

भोक्ष्यामि तवगेहेऽहं शङ्करानुमता मुने ! । गत्वेशं गौतमो विप्रो लब्धानुज्ञः पुनर्गतः

भोजयामास गिरिशां देवीं चारुन्धतीं तथा ।
भुक्त्वाऽथ पार्वती सर्वं गन्धपुष्पसभूषणा ॥ २४० ॥

सहानुचरकन्याभिःसहस्राभिर्हरं ययौ । अथाह शङ्करो देवीं गच्छ गौतममन्दिरम्

सन्ध्योपास्तिमहं कृत्वा ह्यागच्छामि पुनर्गृहम् ।
इत्युक्ता प्रययौ देवी गौतमस्यैव मन्दिरम् ॥२४२॥
सन्ध्यावन्दनकामाश्च सर्वे पथ विनिर्गताः ।
कृतसन्ध्यास्तटाके तु महेशाद्यास्तु कृत्स्नशः ॥२४३॥

अथोत्तरमुखः शम्भुर्न्यासं कृत्वा जजाप ह । अथ विष्णुर्महातेजा महेशमिदमब्रवीत्
सर्वैर्नमस्यते यस्तु सर्वैरेव समर्च्यते । हूयते सर्वयज्ञेषु स भवान्किं जपिष्यति ॥२४
[illegible] सर्वे त्वामेवैकमुपासते । स भवान्देवदेवेश कस्मै वा रचिताञ्जलिः ॥२४
[illegible] फलदस्त्वं महेश्वर । तवकःफलदो वन्द्यःको वा त्वत्तोऽधिकोव

शङ्कर उवाच ।

ध्याये न किञ्चिद्गोविन्द न नमस्येह किञ्चन । नोपास्येकं च न हरे नजपिष्ये हर्कचन
किं तु नास्तिकजन्तूनां प्रवृत्त्यर्थमिदं मया । दर्शनीयं हरे! तेस्युरन्यथा पापकारिणः
तस्माल्लोकोपकारार्थमिदं सर्वं कृतं मया । ओमित्युक्त्वा हरिरथ तं नत्वा समतिष्ठत
अथ ते गौतमगृहं प्राप्ता देवगणर्षयः । सर्वे पूजामथो चक्रुर्देवदेवाय शम्भवे ॥२५१॥
देवो हनूमतासार्द्धं गायन्नास्ते रघूत्तम ! । पञ्चाक्षरीं महाविद्यां सर्वे एव तदाऽजपन् ॥
हनूमत्करमालम्ब्य देव्यभ्याशं गतो हरः । एकशय्या समासीनौ शम्भुमौ देवदम्पती ॥
गायन्नास्ते स हनुमांस्तुम्बुरुर्नारदस्तथा ।
नानाविधविलासांश्च चकार परमेश्वरः । आहूय पार्वतीमीश ! इदं वाक्यमुवाच ह ॥

श्रीसदाशिव उवाच ।

बध्नामि धम्मिल्लमेहि मत्पुरतः शुभे । देव्याह न च युक्तं तद्धर्मांशुभूषणं स्त्रियाः
प्रसाधनकृतावनर्थान्तरमापतेत् । केशप्रसाधने देव ! त्वत्तं सर्वं न चेप्सितम् ॥
य बन्धेकृते पश्चाद्संभ्रान्तप्रमार्जनम् । ततोऽश्रमसंलग्नकेशपुष्पादि मार्जनम् ॥२५७॥
तस्मिन्वर्तमाने तु महात्मानो यदाऽऽगमन् । तदा किमुत्तरं वाच्यं तव देवादिवन्दित
यान्ति चेदथ विभो भीतिर्नाशमुपेष्यति । एवं हि भाषमाणां तां करेणाकृष्य शङ्करः
स्वोर्वोस्तां स्थापयित्वैव विन्यस्य कचबन्धनम् ।
विभज्य च कराभ्यां ■ प्रससार नखैरपि ॥२६०॥
विष्णुदत्तां पारिजातस्रजं कचगतामपि ।
कृत्वा धम्मिल्लमकरोदथ मालां करागताम् ॥ २६१ ॥
मल्लिकास्रजमादाय बबन्ध कचबन्धने । कल्पप्रसूनमालां च ब्रह्मदत्तां महेश्वरः ॥२६२॥
पार्वतीवसने गूढगन्धाढ्ये च समादधात् । अथांसपृष्ठसंलग्नमार्जनं कृतवान्विभुः ॥
स्तनीवेरधो देव्या वस्त्रवेष्टैरधोगतः । देवः किमिदमित्युक्त्वा नीवीबन्धं चकार ह
नासाभूषणमेतत्ते पश्यामि समद्रावतः ।
इत्युक्त्वा स्वयमादाय विच्छायं मौक्तिकं सती ॥ २६५ ॥

दरिद्रायाःसमायोगे मुक्ताफलमदीप्तिमत् । इदं न प्रियतो मुक्ताफलं मम तव प्रियम् ॥

पार्वत्युवाच ।

अहो त्वन्मन्दिरं शम्भो सर्ववस्तु समृद्धिमत् । पूर्वमेव मया सर्वं वस्तुजातं विभूषणे
अहो द्रविणसम्पत्तिर्भूषणैरधनात्मने । शिरो विभूषितं देव ब्रह्मशीर्षस्य मालया ॥२६८
नरकस्य तथा माला वक्षःस्थलविभूषणम् । शेषश्च वासुकिश्चैव सविषौ तव कङ्कणे
दिशोऽम्बरे जटाकेशा भसितं चाङ्गरागकम् । महोक्षो वाहनं गोत्रं कुलं चाज्ञातमेव च
ज्ञायेते पितरौनैव विरूपाक्षं तथा वपुः । एवं वदन्तीं गिरिजां विष्णुःप्राहातिकोपनः ॥

किमर्थं निन्दसे देवि ! देवदेवं जगत्पतिम् ।

त्यक्ष्ये प्राणान्प्रियान्भद्रे तव नूनमसंयमम् ॥ २७२ ॥

यत्रेशनिन्दनं भद्रे तत्र नो मरणंमतम् । इत्युक्त्वाऽथ नखाभ्यां हि हरिश्छेत्तुं शिरोगतः
महेशस्तु करंगृह्य प्राह मा साहसं कृथाः । पार्वतीवचनं सत्यं प्रियं मम तवाप्रियम् ॥

ममाप्रियं हृषीकेश ! कर्तुं यत्किञ्चिदिष्यते ।

ओमित्युक्त्वाऽथ भगवांस्तूष्णीं भूतोऽभवद्धरिः ॥ २७५ ॥

हनुमानथ देवाय व्यज्ञापयदिदं वचः । अर्चयामि विनिष्कामं ममपूजा व्रतं तथा ॥२७६

पूजार्थमप्यहं गच्छे मामनुज्ञातुमर्हसि ॥ २७७ ॥

शङ्कर उवाच ।

कस्य पूजा क वा पूजा किं पुष्पं किं दलं वद ।

को गुरुः कश्च मन्त्रस्ते कीदृशं पूजनं तथा ॥ २७८ ॥

एवं वदति देवेशे हनूमानतिकम्पितः । वेपमानसमस्ताङ्गःस्तोतुमेव प्रचक्रमे ॥२७९॥

हनुमानुवाच ।

नमो देवाय महते शङ्करायामितात्मने । योगिने योगधात्रे च योगिनां गुरवे नमः ॥
योगिगम्याय देवाय ज्ञानिनां पतयेनमः । वेदानांपतये तुभ्यं देवानांपतये नमः ॥२८१
ध्यानाय ध्यानगम्याय ध्यातॄणां गुरवेनमः । शिष्टाय शिष्टगम्याय भूम्यादिपतये नमः
... वेदवाक्यानां निधयेनमः । आतनुष्वेति वाक्यैश्च प्रतिपाद्याय ते नमः

अष्टमूर्ते नमस्तुभ्यं पशूनांपतये नमः । त्र्यम्बकाय त्रिनेत्राय सोमसूर्याग्निलोचन! ॥२८४
शुभ्रङ्गराजधत्तूरद्रोणपुष्पप्रियायते । बृहतीपूगपुन्नागचम्पकादिप्रियाय च ॥ २८५ ॥

नमस्तेऽस्तु नमस्तेऽस्तु भूय एव नमोनमः ।
शिवो हरिमथ प्राह मा भैषीर्वेद मेऽखिलम् ॥ २८६ ॥

हनुमानुवाच ।

शिवलिङ्गार्चनं कार्यं भस्मोद्धूलितदेहिना । क्रियासम्पादितैस्तोयैः पुष्पाद्यैरपि तादृशैः
देव विज्ञापयिष्यामि शिवपूजाविधिं शुभम् ।
सायंकाले तु सम्प्राप्ते ह्यशिरःस्नानमाचरेत् ॥ २८८ ॥

क्षालितं वसनंशुष्कं धृत्वाऽऽचम्य स्थिरमधीः । अथभस्मसमादाय आग्नेयं स्नानमाचरेत्
प्रणवेन समामन्त्र्याप्यष्टवारमथापि वा पञ्चाक्षरेण मन्त्रेण नाम्ना वा येन केनचित्

तताभिमन्त्रितं भस्म दर्भपाणिःसमाहरेत् ।
ईशानः सर्वविद्यानामुक्त्वा शिरसि पातयेत् ॥ २९१ ॥
तत्पुरुषाय विद्महे मुखे भस्म प्रलेपयेत् ।
अघोरेभ्योऽथ घोरेभ्यो भस्मवक्षसि निक्षिपेत् ॥ २९२ ॥

वामदेवाय नमइति गुह्यस्थाने विनिक्षिपेत् । सद्योजातं प्रपद्यामि निक्षिपेदथ पादयोः ॥
उद्धूलयेत्समस्ताङ्गे प्रणवेन विचक्षणः । त्रैवर्णिकानामुदितःस्नानादि विधिरुत्तमः ॥
शूद्रादीनां प्रवक्ष्यामि यदुक्तं गुरुणा तथा । शिवेतिपदमुच्चार्य भस्मसम्मन्त्रयेत्सुधीः
ततस्तमथादाय शिवायेति शिरःक्षिपेत् । शङ्कराय मुखेप्रोक्तं सर्वशाय हृदि क्षिपेत् ॥

स्थाणवे नम इत्युक्त्वा गुह्ये चापि स्वयम्भुवे ।
उच्चार्य पादयोः क्षिप्त्वा भस्मशुद्धमतःपरम् ॥२९७॥
नमःशिवायेत्युच्चार्य सर्वाङ्गोद्धूलनं स्मृतम् ।
प्रक्षाल्य हस्तावाचम्य दर्भपाणिःसमाहितः ॥ २९८ ॥

दर्भाभावे सुवर्णं स्यात्तदभावे गवालकः । तदभावे तु दूर्वाःस्युस्तदभावे तु राजतम् ॥
सन्ध्योपासित जपं देव्याः कृत्वा देवगृहं व्रजेत् ।

देव वेदिमयो वापि कल्पितं स्थण्डिलं तु वा ॥ ३०० ॥
मृण्मयं कल्पितं शुद्धं पद्मादिरचनायुतम् । चातुर्वर्णकरङ्गैश्च श्वेतेनैकेन वा पुनः ॥
विचित्राणि च पद्मानि स्वस्तिकादि तथैव च । उत्पलादि गदाशङ्खत्रिशूलं डमरुं तथा
सरोजपञ्चप्रासादं शिवलिङ्गमथैव च । सर्वकामफलं वृक्षं कुलकं कोलकं तथा ॥३०२
षट्कोणं च त्रिकोणं च नवकोणमथापि वा ।
कोणद्वादशकां दोलां पादुका व्यजनानि च ॥ ३०४ ॥
चामरच्छत्रयुगलं विष्णुब्रह्मादिकं तथा । चूर्णैर्विरचयेद्देवां धीमान्देवालयेऽपि वा ॥
यत्रापि देवपूजास्यात्तत्रैवं कल्पयेद्बुधः । स्वहस्तरचितं मुख्यं क्रीतंचैव तु मध्यमम्
याचितं तु कनिष्ठं स्याद्तु बलात्कारमथाधमम् ।
अर्हेषु यत्त्वनर्हेषु बलात्कारात्तु निष्फलम् ॥ ३०७ ॥
रक्तशालिजपास्थाणकलमासितरक्तकैः । तण्डुलैर्व्रीहिमाषोत्थैःकणैश्चैव यथाक्रमम् ॥
उत्तमैर्मध्यमैश्चैव कथितैरधमैस्तथा । पद्मादि स्थापनैरेव तत्सम्यग्यागमाचरेत् ॥३०९
प्रागुत्तरमुखो वापि यदि वा प्राङ्मुखो भवेत् ।
आसनं च प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥ ३१० ॥
कौशं चार्म्मं चैलतल्पं दारवं ताडपत्रकम् । काम्बलं काञ्चनंचैव राजतं ताम्रमेव च ॥
गोकरीपार्कजैर्वापि त्वासनं परिकल्पयेत् । वैयाघ्रं रौरवं चैव हारिणं मार्गमेव च ॥
चार्मं चतुर्विधं ज्ञेयमथ चन्धुकमेव च । यथासम्भवमेतेषु ह्यासनं परिकल्पयेत् ॥३१२
कृतपद्मासनो वापि स्वस्तिकासन एव च । दर्भभस्म समासीनःप्राणानायम्य वायतः
तावत्स देवतारूपो ध्यानं चान्तः समाचरेत् ।
शिखान्ते द्वादशाङ्गुल्ये स्थितं सूक्ष्मतनुं शिवम् ॥ ३१५ ॥
अन्तश्चरन्तं भूतेषु गुहायां विश्वमूर्तिषु । सर्वाभरणसंयुक्तमणिमादि गुणान्वितम् ॥
ध्यात्वा तं धारयेच्चित्ते तद्व्याप्त्या पूरयेत्तनुम् ।
तया दीप्त्या शरीरस्थं पापं नाशमुपागतम् ॥ ३१७ ॥
*पारदसम्पर्कात्ताम्रकं श्वेतं यथा भवेत् । तद्वद्वादशदलावृत्तमष्ट. पञ्च त्रिरेव वा ॥

शीतोपचारं कृत्वाऽथ तत आचमनादिकम् । वस्त्रं तथोपवीतं च पञ्चगन्धक्रमेव च ॥
कर्पूरं मदयंचापि पाटीरमथवा भवेत् । उभयं मिश्रितं वापि शिवलिङ्गं प्रपूजयेत् ॥
कृत्स्नपीठं गन्धपूर्णं यद्वा विभवसारतः । तूष्णीमथोपचारं वा कालियं पुष्पमर्पयेत् ॥
श्रीपद्ममदचित्याजं यथाशक्त्याऽखिलं यथा । अनेकद्रव्यधूपं च गुग्गुलं केवलं तथा ॥
कपिलाघृतसंयुक्तं सर्वधूपाय शस्यते । धूपं दत्त्वा यथाशक्ति कपिलाघृतदीपकान् ॥
अथवाप्याज्यमात्रेण दीपान्दत्त्वोपहारकम् ।
यथाशक्त्युपपन्नं च दत्त्वा पुष्पसमन्वितम् ॥ ३४२ ॥
मुखशुद्धिं ततो दत्त्वा दत्त्वा ताम्बूलमादरात् । प्रदक्षिणनमस्कारौ पूजैवंहि समाप्यते
गीताङ्गपञ्चकं पश्चात्तानि विज्ञापयामि ते । गीतं वाद्यं पुराणं च नृत्यं हासोक्तिरेव च
नीराजनं च पुष्पाणामञ्जलिश्चाखिलार्पणम् । क्षमा चोद्वासनंचैव कीर्तितं चोपचारकम्
भूषणं च तथा छत्रं चामरं व्यजनं तथा । शिवोपवीतं कैङ्कर्यं षडीशानोपचारकम् ॥
द्वात्रिंशदुपचारैस्तु यःसमाराधयेच्छिवम् । एकेनाह्ना समस्तानां पापानां नाशनं ध्रुवम्
द्वात्रिंशदुपचारं स्यात्पूजनं तूत्तमोत्तमम् ॥ ३४७ ॥

सदाशिव उवाच ।

एवमेतत्कपिश्रेष्ठ तवपूजां वदाम्यहम् । मत्पादयुगलं पूज्य सर्वपूजाकरो भव ।
आराध्येत्थं यथा लिङ्गे तन्ममाराधनं कुरु ॥ ३४८ ॥

हनुमानुवाच ।

गुरुणा लिङ्गपूजैव नियता कल्पिता मम । तां करोमि पुरादेव पश्चात्त्वत्पादपूजनम् ॥
इत्युक्त्वैव नमस्येशं शिवलिङ्गार्चनेऽभवत् ।
सरस्तीरमथो गत्वा कृत्वा सैकतवेदिकाम् ॥ ३५० ॥
तालपत्रैर्विरचितमासनं पर्यकल्पयत् । प्रक्षाल्य पादौहस्तौ तु समाचम्य समाहितः ॥
भस्मस्नानमथो चक्रे पुनराचम्य वाग्यतः । देववेद्यामथो चक्रे पद्मानि सुमनोहरम् ॥
तालपत्रं पद्मासनगतःकपिः । प्राणानायम्य सन्यासं शुक्लध्यानसमन्वितः ॥
गुरुर्माद्यानं जपन्नासीदतःपरम् । अथ देवार्चनं कर्तुं यत्नमास्थितवानपि ॥

पलाशपत्रपुटकद्वयानीतजलंशुचि । शिरःकमण्डलुगतं निधायाग्नि त्रिमन्त्रितम् ॥३५५
आवाहनादि कृत्वाथ स्नानपर्यन्तमेव च । अथ स्नापयितुं देवमादाय करसम्पुटे ॥३५६
कृत्वा निरीक्षणं देवंपीठंनोदृष्टवान्कपिः । लिङ्गमात्रं करगतं दृष्ट्वा भीतिसमन्वितः ॥
इदमाह महायोगी किं वा पापं मयाकृतम् । यदेतत्पीठरहितं शिवलिङ्गं करस्थितम् ॥
ममाद्य मरणं सिद्धं पीठं चेन्नागमिष्यति । अथ रुद्रं जपिष्यामि तदा याति महेश्वरः ॥
. इति निश्चित्य मनसा जजाप शतरुद्रियम् ।
अथापि न समायातो महेशोऽथ कपीश्वर. ॥ ३६० ॥
ई प्रपातयद्भूम्यां वीरभद्रः समागतः । किमर्थं रुदसे भक्त तद्धेतुं वदस्व मे ॥३६१

हनुमानुवाच ।

· पीठहीनमिदं लिङ्गं पश्य मे पापसञ्चयम् ॥ ३६२ ॥

वीरभद्र उवाच ।

यदि नायाति पीठं ते लिङ्गे मा साहसं कृथाः ।
दाहयिष्याम्यहं लोकं यदि नायाति पीठकम् ॥ ३६३ ॥
य दर्शय मे लिङ्गं पीठं यथागतं न वा । अथ दृष्ट्वा वीरभद्रो लिङ्गं पीठमनागतम् ॥
धुकामोऽखिलाँल्लोकान्वीरभद्रःप्रतापवान् । अनलं भुवि चिक्षेप क्षणाद्दग्धा महीतदा
। सततलान्दग्ध्वा पुनरूर्ध्वमवर्तत । पश्चादूर्ध्वलोकानदहज्जनलोकनिवासिनः ॥
दनेत्रसम्भूतं नखेनादाय चानलम् । जम्बीरफलसङ्काशं कृत्वा करतले विभुः ॥
यदि नायाति पीठं ते दग्धा लोका न संशयः ।
अनायातमथो दृष्ट्वा वीरभद्रः प्रतापवान् ॥ ३६८ ॥
नादि महात्मानो ज्ञात्वा योगेन चागमन् । गौतमस्याश्रमवरं समागम्य महेश्वरम्
न्तो देवादि सेव्यमानमपि द्विजाः । अस्तुवन्नथ च स्तोत्रैःसर्वं वेदसमुद्भवैः ॥
ॐनमो देवदेवाय तस्मै शुद्धप्रभाचिन्त्यरूपाय तस्मै ।
नम सुराणामधीशाय तस्मै नमो वेदगुह्याय शुद्धाय तस्मै ॥ ३७१ ॥
नमः शिवायाद्रिदेहाय तस्मै नमो व्यालयज्ञोपवीताय तस्मै ।

नमः सुराविन्दुसन्दोहवर्णैस्त्रर्यांविन्दुविभ्रमराय तस्मै ॥ २७२ ॥
पृथिव्यम्भोवायुराकाशमापःपुनःशशी वह्निमूर्यौ तथाऽऽत्मा ।
यस्याष्टैता मूर्तयःशङ्करस्य तस्मै नमो ज्ञानगम्याय शश्वत् ॥२७३॥
एतां स्तुतिमथाकर्ण्य भगनेत्रप्रदः शिवः ।
विष्णुमाह [redacted] गच्छ त्वं समानय च तान्द्विजान् ॥२७४॥
आनीतास्तेन हरिणा देवाय प्रणतास्तु ते । तानाह शङ्करो वाक्यं किमर्थं यूयमागताः

मुनय ऊचुः ।

देव द्वादशलोकानां दृश्यन्ते भस्मराशयः । स्थितमेकं वनमिदं पश्यत्वं लोकसङ्ग्रहम्

सदाशिव उवाच ।

उद्धृत्यैरुग्रपञ्चलोकानां दाहे सन्देह एव नः । कथमङ्गारवृष्टिश्च कथं नो वा महाध्वा

मुनय ऊचुः ।

भीतिरस्माकमधुना वर्तते वीरभद्रतः । स एवाङ्गारवृष्टिं च पिपासुरिव शामपाव
देवोऽथ वीरमाहूय किं वीरेत्यब्रवीद्विभुः । वीरो हनूमतो लिङ्गपीठामाधादिदं हतम
कपेश्चित्त परिज्ञातुं मयाहृतमिदं द्विज । कृपानिधिरथो देवो यथापूर्वमकल्पयत् ॥२८

दग्धानस्यखिलांल्लोकान्पूर्ववतः शोभनान्विभुः ।
कल्पयामास विश्वात्मा वीरभद्रमथाब्रवीत् ॥ ३८१ ॥

आलिङ्ग्याघ्राय शिरसि ताम्बूलं दत्तवान्हरः । अथाऽसौ हनुमानीशपूजनं कृतवानथ
एकं वनवरं तत्र गन्धर्वं सविपञ्चिकम् । इदमाह महावीणा मम वै दीयतामिति

गन्धर्वो न मया त्याज्या वीणा प्राणसमा मम ।
ममापि प्राणसदृशी वीणेत्याह कपीश्वरः ॥ ३८४ ॥

अथ मुष्टिनिपातेन गन्धर्वे पतिते कपिः । आदाय वीणां महतीं स्वरतन्तुसमन्विता

मत्ततुसंयुतां कृत्वा राजवृक्ष फलाकृतिम् ।
तस्योरसि विनिक्षिप्य गायन्नागाच्छिवान्तिकम् ॥ ३८६ ॥

बृहतीकुसुमैःशुद्धैर्देवपादावपूजयत् । तस्मै वरमथ प्रादादाकस्यं जीवितं पुनः ॥३८७

समुद्रलङ्घने शक्तिं वरं प्रादाद्दयापरम् ॥ ३८८ ॥

समस्तभूपासुचिभूषिताङ्गः स्वदीप्तिमन्दीकृतदेवदीप्तिः ।

प्रसन्नमूर्तिस्तरुणः शिवाङ्कःसम्भावयामास समस्तदेवान् ॥ ३८९ ॥

वसुद्रमनीयं च समादाय महेश्वरः । पीतवस्त्रमिदं देव त्वं गृहाण हरे ! शुभम् ॥

मणे रक्तवसनं सर्वेषां वसुदस्तथा । देवर्षिदानवादीनां ददत्याम्यसुयुग्मकम् ॥

रामोऽपि चैतदाकर्ण्य शम्भवे युग्ममार्पयत् ।

सुसूक्ष्मं बहुमूल्यं च स्वर्णभूषणमेव च ॥ ३९२ ॥

थ भुक्त्वा सुखासीनःसामात्यःस पुरोहितः । नानामुनिगणैर्भूपैर्वानरैर्गौतमीत

शम्भुं पुराणतत्त्वज्ञं राघवो वाक्यमब्रवीत् ।

धमेव सर्वं जानीषे सर्वधर्मं गुहाशयम् । कस्मिन्कस्मिन्युगे यद्वार्षिक विशिष्टं वद

शम्भुरुवाच ।

ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञ एव च । द्वापरे चार्चनं विष्णोः दानं च हरिकीर्तन

सर्वं च शस्तं सर्वत्र ध्यानं न च कलौ युगे ।

नराणां मुग्धचित्तत्वात्कृच्छ्रस्थानां विशांपते ॥ ३९६ ॥

। धर्मे निष्ठाबुद्धिर्न वेदेनैव च स्मृतौ । न क्रतौ न स्वधाकारे पुराणानां च न

न यज्ञे न च तीर्थेषु न च शुश्रूषणे सताम् ।

नेज्यायां देवतानां च न स्वजातीयकर्मणि ॥ ३९८ ॥

। देवस्मरणेनापि [redacted] च क्वापि वृत्ते नृप । अतश्च दीर्घकालानां पुण्यानामक्षमा नर

दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः ।

अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते ॥ ४०० ॥

येनाञ्जितपापनाशः स्यात्प्रायश्चित्तैस्तु नान्यथा ।

महाज्ञानी गयाश्राद्धी काशीगन्ता श्रुतीरतः ॥ ४०१ ॥

पुराणश्रवणमाश्रित्ते श्रोता तस्य च राघवः । युगानामनुसारेण तथार्थस्य विवेचना

स्वपरप्रत्ययोत्पादात्परब्रह्म प्रकाशनात् । पुराणवक्ता सर्वस्माद्ब्राह्मणस्तु विशि

नमः सुधाबिन्दुसन्दोहवर्षत्त्रयीबिन्दुविभ्रमराय तस्मै ॥३७२॥
पृथिव्यथोवायुराकाशमापःपुनःशशी वह्निसूर्यौ तथाऽऽत्मा।
यस्याष्टैता मूर्तयःशङ्करस्य तस्मै नमो ज्ञानगम्याय शश्वत् ॥३७३॥
एतां स्तुतिमथाकर्ण्य भगनेत्रप्रदः शिवः।
विष्णुमाह च गच्छ त्वं समानय च तान्द्विजान् ॥३७४॥

आनीतास्तेन हरिणा देवाय प्रणतास्तु ते। तानाह शङ्करो वाक्यं किमर्थं यूयमा

मुनय ऊचुः।

देव द्वादशलोकानां दृश्यन्ते भस्मराशयः। स्थितमेकं वनमिदं पश्यत्यं लोकसह

सदाशिव उवाच।

ऊर्ध्वंमध्यपञ्चलोकानां दाहे सन्देह एव नः। कथमङ्गारवृष्टिश्च कथं नो वा महा

मुनय ऊचुः।

भीतिरस्माकमधुना वर्तते वीरभद्रतः। स एवाङ्गारवृष्टिं च विपासुरिव तामवा

देवोऽत्र वीरमाहूय किं वीरेत्यब्रवीद्वचः। वीरो हनूमतो लिङ्गपीठामायादिदं इला

करेऽधिस्त परिग्रातुं मयाहृतमिदं वृहत्। कृपानिधिरयो देवो यथापूर्वमकल्पयन्

समुद्रलङ्घने शक्तिं वरं प्रादाद्दयापरम् ॥ ३८८ ॥
समस्तभूषासुविभूषिताङ्गः स्वदीप्तिमन्दीकृतदेवदीप्तिः ।
प्रसन्नमूर्तिस्तरुणः शिवाङ्कः सम्भावयामास समस्तदेवान् ॥ ३८९ ॥
पीतमुद्गमनीयं च समादाय महेश्वरः । पीतवस्त्रमिदं देव त्वं गृहाण हरे ! शुभम् ॥३९०
ब्रह्मणे रक्तवसनं सर्वेषां वसुदस्तथा । देवर्षिद्विजवादीनां दत्तवान्वस्त्रयुग्मकम् ॥३९१॥
रामोऽपि चैतदाकर्ण्य शम्भवे युग्ममार्पयत् ।
सुसूक्ष्मं बहुमूल्यं च स्वर्णभूषणमेव च ॥ ३९२ ॥
अथ भुक्त्वा सुखासीनःसामात्यःस पुरोहितः । नानामुनिगणैर्भूपैर्वानरैर्गौतमीतटे ॥
शम्भुं पुराणतत्त्वज्ञं राघवो वाक्यमब्रवीत् ।
त्वमेव सर्वं जानीषे सर्वधर्मं गुहाशयम् । कस्मिन्कस्मिन्युगे ब्रह्मन्कि विशिष्टं वदस्व मे
शम्भुरुवाच ।
ध्यानमेव कृते श्रेष्ठं त्रेतायां यज्ञ एव च । द्वापरे चार्चनं शिष्ये दानं च हरिकीर्तनम् ॥
सर्वं च शस्तं सर्वत्र ध्यानं न च कलौ युगे ।
नराणां मुग्धचित्तत्वात्कलुषस्थानां विशांपते ॥ ३९६ ॥
धर्मे नियताबुद्धिर्न वेदेनेव च स्मृतौ । न क्रतौ न स्वधाकारे पुराणानां च न श्रुतौ
न यज्ञे न च तीर्थेषु न च शुश्रूषणे सताम् ।
नेज्यायां देवतानां च न स्वजातीयकर्मणि ॥ ३९८ ॥
देवस्मरणेनापि न च कापि नृपे नृप । अतश्च दीर्घकालानां पुण्यानामक्षमा नराः ॥
दानं तु स्वल्पकालत्वात्कर्तुं शक्नोति मानवः ।
अतश्च कलिदुष्टानां प्रायश्चित्तं न विद्यते ॥ ४०० ॥
वेशाश्रितपापनाशः स्यात्प्रायश्चित्तैस्तु नान्यथा ।
ब्रह्मज्ञानी गयाश्राद्धी काशीगन्ता श्रुतीरतः ॥ ४०१ ॥
पुराणश्रावमाश्चैते श्रोता तस्य च राघवः । युगानामनुसारेण तथार्थस्य विवेचनात् ॥
स्वपरप्रत्ययोत्पादात्परब्रह्म प्रकाशनात् । पुराणवक्ता सर्वस्माद्ब्राह्मणस्तु विशिष्यते

व्याख्यानमपि च श्रुत्वा पौराणिकमभाषत ।
कीदृङ् नारायणः प्रोक्तः कीदृशोऽपि महेश्वरः ॥ ४२५ ॥
किंपरं त्वयनं प्रोक्तं द्वेषःकीदृगुदाहृतः । किं तत्परमितिख्यातं तत परतरं च किम् ॥

पौराणिक उवाच ।

परं तद्ब्रह्मणःस्थानं सुखव्यक्तैकलक्षणम् । ततः परतरं विष्णोर्धामतद्ब्रह्मणोऽधिकम्
अविनाशितया तत्तु कीर्तितं परमंपदम् । तन्मध्ये पुरुषो विष्णुस्तद्रूपरमं विभुः ॥
आपो हि नरजन्मत्वान्नाराः प्रोक्ता मनीषिभिः ।
नाराश्चास्यायनं यस्मात्तेन नारायणः स्मृतः ॥ ४२६ ॥
स्परं वर्तनं येषां ते प्रोक्तास्तत्परायणाः । महदादीनि तत्त्वानि यानि तेषां च ईश्वरः
सूर्याग्निशशिनेत्रोऽसौ महेशः स्यादुमापतिः । द्वेषो हि वैरं विज्ञेयमीश्वरे परमात्मनि

शम्भुरुवाच ।

एवं पुराणभट्टेन समीरितमिदं वचः । चिन्तयन्पुनरप्याह मादृशस्य कथं गतिः ॥४३२
पौराणिकोऽथ तं प्राह शृणु वक्ष्यामि ते गतिम् ।
कुरु सर्वेण यत्नेन प्रायश्चित्तं यथाविधि ॥ ४३३ ॥
धर्मेश्वर यथाशक्ति यथाकालं यथाविधि । विमुक्तपापः पश्चात्त्वमुत्तमां गतिमेष्यसि ॥
पुराणमथवा नित्यं शृणुष्वावहितश्चरन् । निराशो वा महेशानं पूजयस्व पिनाकिनम्
देवं वा पुण्डरीकाक्षं केशवं क्लेशनाशनम् । संन्यासमथवा नित्यं ब्रह्मज्ञानपरोभव ॥
अथवा गच्छ काशीशं मुक्तौ वा मुक्तिमाप्नुहि । गयां वा गच्छतत्रर्षेश्राद्धंकर्तुं प्रयत्नतः
अथवा सर्ववेदानां सारं पातकनाशनम् ।
रुद्रं रुद्रप्रियकरं जप प्रत्यहमादरात् ॥ ४३८ ॥
श्रीशैलमथवा गच्छ केदारमथवेच्छया । अथवा प्रतिवर्षं तु माघस्नानं समाचर ॥४३९॥
किमत्र बहुनोक्तेन धर्मभक्तःसदाभव । नैवं नरकपातस्ते भविता नु द्विजाधम ! ॥४४०

गौतम उवाच ।

श्रुत्वा सर्वं करिष्यामि पुराणं भवतो मुखात् ।

शास्त्रं विश्वासहेतुं च वर्ज्यं चापि वदस्व मे ॥ ४४९ ॥

पौराणिक उवाच ।

वर्ज्यं मांसं सुराऽन्यस्त्री भोगो द्यूतं विकत्थनम् । पारुष्यमनृतंमायादेवदेवविनिन्दनम्
गुरूणां सुरवृद्धानां पुराणस्मृतिमानिनाम् । निन्दनं श्वेतवृन्ताकं कृतकालानुवर्तनम् ॥
बीजपूरं कुसुम्भं च लोहितं शृङ्गमेव च । अरलं नालिकेरं च कूष्माण्डकं तथैव च ॥
कोविदारफलं तैलं पक्वं मानवजं पयः । वार्ध्रीणसखरीदुग्धं सूतिकाक्षीरमाविकम् ॥
औष्ट्रमेकशफक्षीरं मार्गमाजं मृसम्भवम् ।
विषरसा सन्धिनीक्षीरं लवणंचैव योगियत् ॥ ४४६ ॥
नालिकेररसं कांस्ये ताम्रे मधु च सीसके । काचे तक्रंकरम्भांश्च धुनाकान्नैव कारयेत्
होमं तु मृण्मयेपात्रे पुरोडाशं तु राजते । न सेवेत परंलोके शुभार्थी तु विचक्षणः ॥
पात्रान्तश्चूर्णलेपोऽपि तत्र भक्षणमेव च । क्रमुकस्य तथा भक्षश्चूर्णपत्रस्य चैव हि
क्रमुकस्यापि पक्वस्य भक्षणं क्रिमियोगिनः । पायसे लवणंचैव केवलं च करार्पितम् ॥
सिन्धुसौराष्ट्रकाश्योजमागधेषु च सिंहले ।
न दोषाय भवेत्तत्र क्षीरं च लवणान्वितम् ॥ ४५१ ॥
क्षीराणि च समस्तानि लवणानि च योगतः । देशेष्वन्येषु दोषाय पाने चैवे संशय
किमत्र बहुनोक्तेन सद्भिर्निन्द्यं विवर्जयेत् ॥ ४५२ ॥

शम्भुरुवाच ।

एवं तस्य वचःश्रुत्वा ब्राह्मणस्य महात्मनः। स्वमेव भवनं गत्वा चिन्तयामास दुःखितः
रात्रौ मृत्युर्दिवाचेति न जानाति महानपि । परलोके सुखं दुःखमिह भोगविनोदनम् ॥
कृमिकीटमनुष्याद्यैः सुखदुःखैःपृथक्पृथक् । प्रतिजीवं तु हेतूनां भेदोऽपि सुविनिश्चयः
एकस्यापि हि जीवस्य नास्ति चैकविधा स्थितिः ।
जन्मकाले महाज्ञानं शैशवेऽत्यल्पबोधनम् ॥ ४५६ ॥
[illegible] नं बाल्ये चाल्यं तथैव च । कौमारे क्रीडनरतिर्यौवने विषयेषितम्
विनिवृत्ते [illegible] द्रव्यसम्पादनेषणा । वार्द्धके भोगलिप्सा च न भोक्तुंसमतेऽपि च

[ष्ठ]यिकाश्लेष्मलालाभिर्वलीपलितकम्पनैः । श्वासकासानिलाक्षिप्तैर्दृष्टीकैर्विकलैर्युतः ॥
केञ्चिद्दत्तुं न शक्नोति न च जानाति किञ्चन । तिष्ठन्तीषु परस्त्रीषु गुह्यस्थानं प्रदर्शयेत्

कोशकण्डूयनपरःक्रूरो जीवितलक्षणैः ।
कण्डूयते स्फिचौ वस्त्रमुद्धृत्य च विचालयन् ॥ ४६१ ॥
भुञ्जानःश्लेष्मणा ग्रासं ग्रसितुं न च शक्नुयात् ।
यदा कासस्तदा जद्धो वायुवायुश्च शब्दवान् ॥ ४६२ ॥
निःसृतिश्च मलस्यापि श्लेष्मनिर्गम एव च ।
स्नुषादि भर्त्सनं बालतालहास्य निदर्शनम् ॥ ४६३ ॥

[न]िर्गमनादीनि सञ्चिन्त्य च पुनःपुनः । आहूतोभोजनार्थं भोज्यान्नादि विनिन्दयन्
[प]ुरुषं च निर्भर्त्स्यं पुनश्चिन्तामवाप सः । अतिदुष्कृतिकर्माऽहं कथं भोक्ष्ये कथं शये
[…]ं तिष्ठे कथं गच्छे परलोकःकथंभवेत् । इति चिन्ताकुलो नित्यं न नमत्यपरान्वितः
[…]स्य सदनं गत्वा पुराणज्ञस्य राघव । लज्जावाक्हतवक्त्रश्च किं करोमीत्यभाषत

न किञ्चिदप्युवाचासौ द्विजःपौराणिकस्तदा ।
पापोऽयमिति विज्ञाय शिष्येण निरगामयत् ॥ ४६८ ॥
गौतमोऽपि विनिर्गम्य द्वार्येव च बहिःस्थितः ।
शुभ्यासीनं तु विज्ञाय पुराणार्थविचारकम् ॥ ४६९ ॥

कथमपि प्राप्य पीठंदत्तं च नाभजत् । निषण्णो भूतले राम पुराणज्ञमभाषत ॥
प्रायश्चित्तं करिष्यामि तदत्रैव विधीयताम् ॥ ४७१ ॥

ब्राह्मण उवाच ।

[…]नि कीर्तयस्व त्वं सर्वथैव कृतानि तु । स चापि नाकृतंकिञ्चिन्मया पापमितीरयन्
[…]पात भूम्यां च कथं खातेतिपीडितः । ब्राह्मणस्तमथ प्राह प्रायश्चित्तं न विद्यते ॥
महापापं त्रिरावृत्ते पुनश्च यदि चेत्कृतम् ॥ ४७४ ॥

गौतम उवाच ।

पौराणिकमहाभाग ! प्राप्याऽपितवामहं कथम् । पापयुक्तोद्विजश्रेष्ठसद्गतिविफलामयेत्

पौराणिक उवाच ।

कौर्मीनं यत्पुराणं तद्देवयोरभिदामिधम् ।
श्रियोतियस्तत्प्रथमं तस्य पापं विनश्यति ॥ ४६० ॥
तस्य वक्ता तु यो विप्रस्तस्य विप्रान्तरं भवेत् ।
श्रोतव्यं मन्यते पापो यदि भार्यां विनश्यति ॥ ६१ ॥
कैवेकं दुष्करं वस्ते श्रोतुर्यत्कुरनिन्दकम् । व्याख्यातरि यदि प्रीतिर्धर्मादेव प्रकाशिनि
चारदर्शने पुण्ये कर्ममोक्षादि दर्शके । मम तुष्टो महेशः स्याद्विष्णुर्विप्रफलप्रदः ॥४६३
पितरस्तारितास्तेन यान्ति मे परमां गतिम् ॥ ४६४ ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे
चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

---

# पञ्चदशाधिकशततमोऽध्यायः

## पुराणपठनकर्तॄणां लक्षणवर्णनम् ।

श्रीराम उवाच ।

कथं पातकसङ्घातसङ्कटे ब्राह्मणाधमे । पुराणज्ञःकथं व्याख्यां चकार द्विजसत्तम ॥

शम्भुरुवाच ।

अध्यापने चाध्ययने जायते चाथ सङ्गमः । सङ्गतो वत्सरं राम याति पातकिपातकम्
पुराणज्ञे तु काकुत्स्थ सर्वतत्त्वार्थवेदिनि । अपि पातकसन्दोहचीर्णपापं प्रणश्यति ॥ ३
प्रभूतवह्निनाशे हि धूमराशिर्यथैव हि । शलभो दीपनाशाय वह्निनाशाय न प्रभुः ॥ ४ ॥
कृतं पापं तथान्येषां नाशनाय पुराणिकः । भूतादिग्रस्तमर्त्यानां भूतादि भयमोचकः ॥
समन्त्रयानपनयेद्यथा न स्वयमातुरः । पौराणिकस्तथा पापं न किञ्चित्प्राप्तुमर्हति ॥
आत्मना च कृतं पापमन्यैरपि च यत्कृतम् । पुराणज्ञो नाशयति त्वतिदुष्टं दैवकर्मवा

भवानीशे हृषीकेशे समवृत्तिर्विवेकवान् । लोकवेदक्रियावेत्ता स्वजाप्यतिनिःस्पृहः
तुष्टःशान्तः क्रियादक्षः प्रभूतो योगकृद्वशी । यथैव हि पुराणज्ञो वसिष्ठो भगवानृषिः
नियोगात्तव भूपाल अयोध्यायामतिष्ठत । अपालयद्भुवं कृत्स्नां त्वां च रक्षःसमापत

स च शुक्रोपदेशेन राक्षसस्त्वामथाभ्यगात् ।
निद्रासक्तं हनिष्यामि नान्यथाऽपसरस्त्विति ॥ ११ ॥

अथ विप्रो विदित्वैतद्वसिष्ठस्य द्विजप्रियः । सुप्तं प्रमत्तं काकुत्स्थं रक्षोहन्तिम संया
प्रहाव्यानयरं तद्धि मयाकार्यं निवारणम् । इति सञ्चिन्त्य विप्रर्षिःसेनामादाय निर्ग

रक्षोहन्तुमशक्तस्तु मृत्युहीनं ततो मुनिः ।
स्वयं च राक्षसो भूत्वा वाक्यमाह महामुनिः ॥ १४ ॥

किमर्थमागतोऽसीहवनं मुनिनिषेवितम् । स आह राजा रक्षोप्रस्तमहं हन्तुमागतः
मुनिरप्याह किं तेन जीवितेन मृतेन वा । भुक्त्वाऽऽमिषं मदीयं तु युद्धं हत्वा जयं म

राक्षस उवाच ।

कथंत्वं राक्षसोमलांभक्षणायमथिष्यसि । वसिष्ठोऽप्यथमानुष्यमास्थाय चिपतिरिथम
निष्ठीव्य मस्तके तस्य मुष्टिना तमताडयत् । ताडितो राक्षसस्तेन व्यद्रावयद्दिशः सम

पलायमानावन्योन्यं अब्धिं तु गतावुभौ ।

तत्रस्थेन ग्रहेणाऽसौ गृहीतो राक्षसस्तदा । मुनिः पुनरयोध्यायां पूर्ववत्समतिष्ठत ।

शम्भुरुवाच ।

तस्मात्स्वामिमतं कुर्यात्पुराणज्ञोविमत्सरः । श्रवणस्य विधानं च कथयामि शृणुष्व
शुभराशे दिनेशुद्धे चारनक्षत्रयोगतः । करणेवापि लग्ने च महतारावलान्विते ॥ २१ ।
अमूढेन ग्रहे वाले न च वृद्धे गुरौ स्थिते । न कृष्णपक्षे ग्रहणे न च नास्तिकगन्निधौ
पूर्वोक्तलक्षणोपेतं पुराणं शृणुयादिति । गृहमेहेऽथवा शुद्धदेवालये मठेऽथवा ॥ २३
नदीतीरे देवगेहे समामण्डप एव च । रथ्यामठेऽथवा रम्ये पुण्यशालासु वा यथाः ॥ २४
स्थयं ममस्वधिष्ण्यामुपाणत्रं विशेषतः । आसनं कल्पितं कुर्याद्गुरवे सर्वविशिष्टम
यदि धर्मासनमिति वक्तव्यं स्यादनिन्द्यम् । पुराणकमदिते यत्कार्यं तद्वृणीयेत् ।

व्याख्यातारं पुराणस्य वस्त्राद्यैःपरिपूजयेत् ।
शुभानि दत्त्वा वस्त्राणि सूक्ष्माणि च नवानि च ॥ २७ ॥
रकण्ठविभूषादि पात्रमासनमेव च । गन्धपुष्पाक्षतैः पूज्य ताम्बूलं विनिवेद्य च ॥
ाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥२६॥
भासरश्च सम्पूज्य गणेशं प्रार्थयेत्ततः । ॐनमेत्यादिमन्त्रेण पूजनं भारतीनुतिः ॥३०॥
तःकाले पुराणस्य प्रक्रमं प्रारभेदिति । उपक्रमदिने राम त्रिपञ्चदशवा शुभाः ॥३१॥
ोका द्वितीये दिवसे ततो द्विगुणितास्शुभाः । तृतीये दिवसे राम ततश्चाधिकमिष्यते
विनानामव्यवच्छेदाद्व्याख्यानं श्रवणं तथा ।
व्यवस्थितिर्यदा जाता तदा पौराणिकं गुरुम् ॥ ३३ ॥
वृत्तान्ति प्रवायार्थं परेद्युः शृणुयादपि । पुराणमेवं श्रोतव्यं दैनन्दिनमिति श्रुतिः ॥
रूपेण यःकश्चित्पुराणं शृणुयान्नरः । यदेवं सत्पुराण तु तत्र याति न संशयः ॥३५
णं श्रोतुकामेन श्लोकश्चैकोऽपि चेच्छ्रुतः । तद्दिने तु कृतं पापं नाशयेत्तु न संशयः
यथं पुराणं शृणुयाच्च यस्तु स ब्रह्महत्याकृतपापबन्धात् ।
सुरापीतिः स्वर्णहरश्च राम ! गुर्वङ्गनागश्च विमुक्तिमेति ॥ ३७ ॥
पापानि चान्यानि कृतानि पुम्भिःसर्वाणि नश्यन्ति पुराकृतानि ।
दापि यात्यब्दशतार्जितानि श्रोतुर्विनश्यन्ति तथा च वक्तुः ॥ ३८ ॥
कलौ समस्तविप्राणां सर्वज्ञत्वं न विद्यते ।
विगुणापि ततो व्याख्या फलदा दानकर्मवत् ॥ ३६ ॥
ाणामभिप्रायं व्यासोवेद न चापरः । अहं वेद्मिविशेषेणव्यासादपि विधेरपि ॥
ध्यायस्तपोवापि न मन्त्रो नजुहोतियः । फलन्ति न तथातिष्ये पुराणश्रवणं यथा
एकैकश्रवणादेव पातकं महदेव तु । नाशमाप्नोत्यसन्देहः श्रीशैले पतनादिव ॥ ४२ ॥
अतो गुरुःपुराणज्ञःश्रोतृवन्द्योऽघनाशनः । न तस्मादधिकःकश्चिद्गुरुरस्ति गतिप्रदः ॥
मन्त्रेषु गुरवो ये च वेदशास्त्रेषु ये मताः । नेशते सर्वविज्ञानं दातुं तस्मान्न बोधकाः
पिशाचाः प्रायशो राम ! ब्रह्मराक्षसनामकाः ।

वेदमन्त्रस्य वेत्तारो दृश्यन्ते न पुराणवित् ॥ ४९ ॥

पुराणविद्गुणोनैव सर्वः सर्वं हि पश्यति । पुराणज्ञो हि मन्त्रमाहात्म्यापनायकः प्रभुः । तत्पूजा सर्वपूजा स्यात्तस्य द्रोहोऽस्य पीडनम् । यथा समस्तदानानां विद्यादानं प्रशस्यते

पौराणिकस्तथा धन्यस्तत्र दानं महत्फलम् ॥ ५० ॥

राम उवाच ।

किं वा पौराणिकेदेयं कियत्कीदृशमेव च । पुराणं कीदृशं पठ्यं पठ्यः कीदृक्पुराणवित्

शम्भुरुवाच ।

वस्त्रसानन्नपानानि स्नेहद्रव्याणि यानि च । गृहं सोपस्करं राम पुराणज्ञाय दापयेत् ॥

पर्याप्तान्येव सर्वाणि अधिकानि फलाधिकात् ।

दद्याद्द्रव्यमतो भूयः सचैलं शोभितं मृदु ॥ ५१ ॥

भूषणानि यथार्हाणि स्वशक्त्या प्रतिपादयेत् । गन्धपुष्पं प्रतिदिनं केवलं गन्धमेव च केवलं च तथापुष्पं फलकाले फलान्यपि । ताम्बूलं च तथा दद्यान्नमस्कुर्याच्च भक्तितः पुराणस्य समाप्तौ तु दद्याद्दानादिकं तथा । अधिकं तु तथादेयं भूहिरण्यादिकं नृप ! ॥ न च तूष्णीमुपक्रम्य श्रोतुमर्हति कश्चन । समासद्भिःकृतायैव या पूजैकेन वा कृता ॥ देवस्थाने यथाशक्ति सर्वैः पूजनमिष्यते । तीर्थेऽपि च यथा राम पुण्येष्वायतनेषु च स्वशक्त्या पूजनं कुर्यात्पुराणज्ञाय राघव । श्रोतुस्तु लक्षणं पूर्वं मयोक्तं तु भवेन्नृप ॥ पौराणिकस्य सर्वस्य लक्षणं कथयामि ते । कुलहीनो महाव्याधिर्महापापी तिरस्कृतः शौचाचारविहीनश्च वेदस्मृतिविवर्जितः । अन्यदेवः पूतिवक्त्रो व्यङ्गश्चाप्यधिकाङ्गवान् परपूर्वापतिःस्तेनः,प्राणिहन्ता निराकृतिः । अथ पठ्यं पुराणं ते कथयामि नृपोत्तम ! ॥ पूर्वज्ञैरुच्यमानं च यत्प्रोक्तं मुनिभिःपरैः । व्यासादयो मुनिवरा यत्प्रोचुस्तदुदीरयेत् ॥

पुराणस्थं पठेद्ग्रन्थं व्याख्यायेत विचारयन् ।

यया कयापि वा राम भाषया देशभेदतः ॥ ६२ ॥

न देशभाषारचितं ग्रन्थं श्रुत्वा फलं लभेत् ।

व्याख्या या काऽपि काकुत्स्थ ! पुराणस्य हिता हि सा ॥६३॥

तस्मात्त्वं देव ! यावत्स व्याख्यास्ये शन्पुराणकम् ॥६४॥

शम्भुरुवाच ।

ं पौराणिकेनोक्तं श्रुतवानपि गौतमः । स्वयं वस्त्रत्रयं प्रादाद्ब्राह्मणाय महात्मने ॥
कौर्मं पुराणं प्रथमं श्रुतवानिति नः श्रुतम् ।
दत्तवान्स्वर्णमधिकं वस्त्राणि च शुभानि च ॥ ६६ ॥
अथ लैङ्गं च शुश्राव वैष्णवं वामनं तथा । पाद्मं च गारुडंचैव सौरं ब्राह्ममथैव च ॥
एवमष्ट स शुश्राव पुराणानि स गौतमः । अथ रामायणंचैव कौर्ममेव पुनश्च सः ॥
शिवनारायणेत्येवं जपं चक्रे सदैव हि । अवाप निधनंचापि स गतो ब्रह्मणःपदम् ॥
ब्रह्मणा पूजितो विप्रो विष्णुलोकमथागमत् ।
विष्णुना पूजितः सोऽथ जगाम शिवमन्दिरम् ॥७०॥
सर्वेषामेव धन्योऽसौ गौतमो मुनिसत्तमः । भारतश्रवणेचापि नियमा ये मयेरिताः ॥
पुरा व्यासेन मुनिना त्रिवर्षाद्यत्कृतं शुभम् ।
श्रवणात्तस्य कृत्स्नस्य व्याकर्ता भारतस्य यः ॥ ७२ ॥
न किञ्चित्प्रणमेद्विप्रं मुक्त्वा योगिनमुत्तमम् ।
सर्वेषामेव धन्योऽसौ भारतं व्याकरोति यः ॥ ७३ ॥
यो महाभारतं नित्यं व्याख्यास्यति पठेच्च वा ।
स सर्वेभ्योऽधिको विप्रस्तारयेच्चैव मानवान् ॥ ७४ ॥
व्याकरोति च पर्वैकंसर्वाणिकतिचित्तु वा । सर्वपापविनिर्मुक्तो हव्ये कव्ये विशिष्यते
तमेव प्रणमेद्विप्रं तमेवार्हं च पूजयेत् । तमेव भोजयेन्नित्यं सर्वं तस्मै निवेदयेत् ॥
तस्य पूजाविधिः प्रोक्तो व्याख्यानसमये द्विजः।
प्रतिपूज्योऽथ वस्त्राद्यैः पूजयेद्विधिमार्गतः ॥ ७७ ॥
आदिपर्वसमाप्तौ च दद्यात्सूक्ष्माम्बरत्रयम् । सुवर्णंत्र्यथाशक्ति सभापर्वणि वाससी
आनुशासनिकारण्यस्वर्गारोहेषु पर्वसु । आदिपर्वणि पूजा या सा पूजा नृपपुङ्गव ! ॥
कर्णाश्वमेधवैराटशल्यद्रोणेषु पर्वसु । सूक्ष्मवस्त्रत्रयं शुद्धं निष्कद्वयमथापि ॥ ८० ॥

क्षुद्रपर्वस्वथान्येषु निष्कावथ समानयेत् । हरिवंशे सनिष्कं तु वस्त्रत्रितयमेव तु ॥
भारतस्याखिलस्यैव समाप्तौ क्षेत्रदो भवेत् ।
रामायणस्य श्रवणे काण्डे काण्डे प्रपूजयेत् ॥ ८२ ॥
क्षेत्रं पर्याप्तमथवा सुवर्णमपि दापयेत् । व्याख्यातुर्गुरुवाक्यस्य सर्वकल्मषनाशनः ॥
अर्थोधर्मश्च कामश्च मोक्षश्च नृपसत्तम । व्याख्याश्रवणतःसर्वे सिध्यन्ति च सुवुद्धयः
ब्रह्महत्यादि पापानां सर्वेषामपि नाशनम् । एकेन श्रवणेनास्य किंनरैर्न श्रुतं भुवि ॥
धान्यवस्त्रसुवर्णाद्यैर्नित्यमेनं प्रपूजयेत् । व्याख्यातारं यतःपापसन्दोहस्य विनाशनम् ॥
अन्यान्यपि पुराणानि मुनिप्रोक्तानि तान्यपि ।
श्रोतॄणां पापनाशाय वक्तुश्चापि विशेषतः ॥ ८७ ॥
यश्च सर्वपुराणानि षट्त्रिंशत्सु प्रकीर्तयेत् ।
शृणोति वा न तस्यास्ति चित्तच्छेदः कदाचन ॥ ८८ ॥
ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते । तृतीयं वैष्णवं चैव चतुर्थं शैवमुच्यते ॥८९॥
अथ भागवतं प्रोक्तं पञ्चमंवपुमुच्यते । भविष्यं नारदीयं च सप्तमं परिकीर्तितम् ॥९०॥
मार्कण्डेयमिति प्रोक्तमष्टमं नवमं तथा । आग्नेयं ब्रह्मवैवर्तं दशमं परिकीर्तितम् ॥ ९१॥
लैङ्गं च वामनंचैव स्कान्दं मात्स्यमथैव च । कौर्मं वाराहमुदितं गारुडं वाथ कीर्तितम्
ब्रह्माण्डमित्यष्टादशपुराणानि विदुर्बुधाः । तथा चोपपुराणानि कथयिष्याम्यतःपरम्
आद्यं सनत्कुमाराख्यं नारसिंहमतःपरम् । तृतीयमाण्डमुद्दिष्टं दौर्वाससमथैव च ॥९४॥
नारदीयमथान्यच्च कापिलं मानवं तथा । तदौशनसं प्रोक्तं ब्रह्माण्डं च ततःपरम् ॥
वारुणं कालिकाह्वानं माहेशं साम्बमेव च । सौरं पाराशरंचैव मारीचं भार्गवाह्वयम् ॥
कौमारं च पुराणानि कीर्तितान्यष्ट वै दश । अष्टादशपुराणानां व्याकर्ता तु मधेरमनुः ॥
इति श्रीपाद्मे महापुराणे पञ्चमे पातालखण्डे शिवराघवसंवादे पुराणमाहात्म्यकथनं
नाम पञ्चदशोत्तरशततमोऽध्यायः ॥ ११५ ॥

---

# षोडशाधिकशततमोऽध्यायः

## जाम्बवदुक्तपुराकल्पीयरामायणकथावर्णनम् ।

सूत उवाच ।

संध्यावन्दनकर्म क्रियतामिति रामो मुनिमाचष्टायम् ।
उष्णद्युतिरस्तमुपैति द्विजकुलमेतन्नीडमुपैति ॥ १ ॥
स्वयमपि सन्ध्यावन्दनकामोऽथजगदुत्तरदिशमुज्झितयानः ।
हाहाहूहूकृतसङ्गीतिर्नन्दिप्रमुखप्रस्तुतकीर्तिः ॥ २ ॥
गौतमीतटमुपेत्य राघवो वायुनन्दनसुधौतपद्युगः ।
जाम्बवत्कृतकरावलम्बनः प्रापदुत्तमनदीं तु गौतमीम् ॥ ३ ॥
कच्छपे धृतकुशः स राघवः प्राणमद्वरुणदिशामपोत्तमाम् ॥ ४॥
दत्त्वा ततोऽर्घ्यत्रितयं यथाविधि प्रहृष्टरोमाऽथ जजाप सोऽन्तरे ।
समापयित्वा वरुणं यथाक्रमं शम्भुं वसिष्ठं प्रणनाम राघवः ॥ ५
ताभ्यां कृताशीरगमन्मनःपरं हनूमता क्षालितपादपङ्कजः ।
जुहाव वह्नीनथ वन्दिमागधैः संस्तूयमानोऽथ विनिर्ययौ बहिः ।
प्रहसच्चन्द्रकिरणैः सुधाक्लिन्नमिवाम्बरम् । प्रसन्नतारकाकुसुमं वितानमिव स
अथालयस्सौधतलं शुद्धामात्येन कल्पितम् । नानासनसमोपेतं समास्थाने य
अथ मुनि ह्युपवेश्य स राघवः स्वयमपि प्रथमासनमाभजत् ।
कपिगणाः परितः पृथुविग्रहा रचनया स्थितिमाप्रतिपेदिरे ॥ ६ ॥
सुखस्थितं नृपमभिवीक्ष्य स द्विजो वचस्तदा समुचितमाह शम्भु
इह स्थितो भवसि समस्तपूजितः कथं कथा नृपवर ! वर्तते गु
आकर्ण्याथ रघूद्वहो द्विजवचः शुश्रूषुरासीत्कथां,
तत्रस्थो निपुणं निवार्य वचनं सर्वैः श्रुतं तत्क्षणात् ।

शुश्रूषामि कथं महानुभुनया स्यात्मानमात्मन्यगा,
स्वीयाचलमनाऽर्जितमिण नृपः किन्त्वैनदित्याह च ॥ ११ ॥
पुत्रमधोप्रभवः पुरा समजनि प्रातो दशास्यो वर्ध,
तस्मादित्यधमश्रया चिरमिदं रामायणं मान्यते ।
कोऽयं विग्रहः समस्तजनतानामिस्तसम्पादकौ,
रामो रुपातगुणैस्य पाति ॥ मया दृष्टोऽथ पूज्योऽथ वा ॥ १२ ॥
अथाह आख्यवाल्मुं स्वृत्तमं कथांप्रति रामायणं न तावकंमिदं हि कल्पितं मतम् ।
समन्तमप चिन्तराद्दामि देव ! तच्छृणु पद्केरुहस्य सूनुनो मया श्रुतं पुरा ह्यभूत् ॥
आख्यपत्तं विमाव्य रामचन्द्रो वचनमाह ।

श्रीराम उवाच ।

कीर्तय पुराणं मे शुश्रूषुः कुतूहलादहं प्रणीतं तत्केन च विभातम् ।

आख्यपानथ वभाये हि विधात्रे नमो नमस्तथैव विष्णुभूरणकेशवाभ्याम् ।
अथ पुरातनं रामायणं कथयामि । यस्य श्रवणेनाखिलजन्मसम्पादितपापक्षयो जायते
अथ तथापि दशरथो दशाश्वसमानरथी महीयसा बलेन सुमालसनामनगरजिगीषया
पङ्केरुहसुतसुतं वसिष्ठमाहूय नमस्कृत्य मुनिदत्तानुज्ञःशताक्षौहिणीसेनया सहास्य
तुरङ्गमं चन्द्रसमानशरीरमतिरोपसमाविष्टो विष्टरश्रवसमाराध्य दण्डयात्रां चकार ।
साध्योनाम स्वीयया सेनयाऽऽवृतो दशरथाभिमुखमाययौ योद्धुं युद्धं चान्योन्यमभूत्
मासमेकं युद्धं कृत्वा दशरथस्तं साध्यं जग्राह । अथ साध्यसूनुर्भूषणो नामा-
ल्पपरिवारो युयुधे दशरथेन । दशरथोऽपि साध्यसूनुं भुयो भूयश्चमवलोक्य योद्धुमेव
नैच्छत् । कथमेतादृशं हन्मि चास्मिन्हतेऽस्य कथं पिता भविष्यति कथं तन्माता
कथमप्रौढयौवना प्रियाभार्या । अमुष्य हि देहे समालिङ्गनचुम्बनपरिवर्तननवीनतरव
लारविन्दपदानि कुसुमानीव दृश्यन्ते । एतत्समानवर्णवया एतादृशःसुमतःपरमप्रीतिव-
र्धनो नामपुत्रो मल्लूकभक्षितो मृतः स्मृतिपथं प्राप्यापि मां रक्षयितुमिच्छतीव
मम हृदयमन्यथाकरोति इति मनसा चिंतयतिबालकं ग्रहीतुमारभत् । स चासा-

ऽपि पराधीनो बभूव । स च कुमारेण सह पराजयखेदममत्वा सुखमध्युवास च । रथोऽपि तत्र मासं स्थित्वा तत्पुत्रसन्दर्शनसुखमवलोक्याचिन्तयत् ॥ अहो दुःखापनोदनक्षममेतन्मुखावलोकनं पुत्रसंवर्द्धनं नाम सर्वराष्ट्रिको मम जयःपुत्र-योगमनुस्मरतो दुःखाय केवलं भवति । तदस्य पृच्छां करोमि कथमीदृशो जायते इति चिन्तयन् तमपृच्छत् । साध्योऽपि सकलमोक्षमार्गं क्षितीशायादिशत् । शानो महाराध्य सर्वैकादशीरुपोष्य द्वादशीषु ब्राह्मणानाराध्य तत्तत्कालभवं पूर्वमभ्यर्च्य व्यञ्जनं पुष्पं च न्यायेन सम्पाद्य कपिलाघृतेन केशवं स्नापयित्वा चूर्णेन संलिप्य गन्धोदकेन स्नापयित्वा सुरभिशरीरं स्वयमुद्धृतं मृगनाभ्या-सारेण वा समेतं देवाङ्गे सर्वमुपलिप्य सतुलसीदलैर्यूथिकाकरवीरनीलोत्पलकम-कोकनदद्रोणकुसुममरुवकदमनकगिरिकर्णिकाकेतकीदलपूर्वैर्यथासम्भवमभ्यर्च्य द्वा-दशाक्षरेण पुरुषसूक्तेन वा नाम्ना षोडशोपचारेण वाऽऽराध्य प्रणम्य स्तुत्वा क्षमापयेत् । तथा व्रतानि विचित्राणि नारायणप्रीणनाय कुर्यात् ।

प्रसन्नो भगवान्मुनिरीप्सितं पुत्रं यच्छति तदमुमाराधयस्वेति दशरथमुक्तवान् । थापि साध्यं तत्र स्थाप्य गत्वाऽयोध्यां तथा सर्वं कृतवान् । अथ पुत्रकामेष्टौ मानायामाहवनीयाद्यज्ञमूर्तिः शङ्खचक्रगदापाणिरुदतिष्ठत् । राजानं च वरं वृणीष्वे-त्युक्तवान् । [redacted] च राजा वव्रे पुत्रानतिधार्मिकान्दीर्घायुषश्चतुरो लोकोपकारका-हीति ।

अथ राज्ञमहिष्यस्तस्तः कौशल्या सुमित्रा सुरूपा सुवेषा चेति । राजानमनु-देव प्रतियोषमेकैकेन पुत्रेण भवितव्यम् ।

अथ कौसल्योवाच ।

एष यदि प्रसन्नो देवस्तदाऽयमुत्पमुच्यतां मम ।

राजोवाच ।

मम यदिष्टं त्वयं प्रार्थ्यसे हरिः । विष्णो ! प्रसीद देवेश ! कमलापते शङ्खचक्रगदाधर ! विभीषण ! सृष्टिसमस्तलोकपालादिपूजितपादयुगल ! शाश्वत !

हरे! नमस्ते नमस्ते एवं स्तुतो भगवानथ राजानमाह।

माधव उवाच।

तव पुत्रो भविष्यामि कौशल्यायाम्। अथ चरुं प्राविशद्धरिः। तं चरुं हि चतुर्धा विभज्य भार्याभ्यो दत्तवान्। अथ कौशल्यायां रामो लक्ष्मणः सुमित्रायां सुरूपायां भरतः सुवेषायां शत्रुघ्नो जज्ञे। खात्पुष्पवृष्टिश्च पपात।

अथ चतुराननः स्वयमुपेत्य जातकर्मादिकाः क्रियाश्चक्रे। त्रिभुवनाभिरामतया राम इति नाम चक्रे रूपशौर्यादिलक्ष्मीयोग्यतया लक्ष्मण इत्यपरस्य भुवं भारात्तारयतीति भरतः शत्रून्हन्तीति शत्रुघ्न इति नामानि कृत्वा ब्रह्मा स्वभवनं जगाम। शिशवश्च वृद्धिमीयुः।

अथ पादसञ्चारिणं बालचन्द्रसङ्काशदर्शनं बिम्बाधरमुन्नततिलप्रसूननासं पुरश्चूलिकालम्बमानरत्नपत्रकं श्रवणलोलम्बमानकुण्डलं वक्षःस्थलविचलितस्थूलमुक्ताहारं विलसत्स्फातिस्वरबाहुवलयं शिञ्जन्मणिकङ्कणरत्नाङ्गुलीयकं हेममणिरचितश्रोणिसूत्रं शिञ्जन्नूपुरोपशोभितपादमङ्गुलीयोपशोभितपादमध्याङ्गुलीकं वज्राङ्कुशसरोजलाञ्छनशोभितोरुपादतलं तूणीरसदृशजङ्घं करिकरसदृशोरुं विस्तृतजघनं सूक्ष्ममध्यवर्तुलावर्तकं गम्भीरनाभिमिन्द्रनीलशिलाविशालवक्षःस्थलं कम्बुग्रीवं चन्द्रबिम्बसदृशवदनमर्धचन्द्रसदृशललाटं नीलकुटिलकुन्तलं क्रीडासक्तं धूलिभिरापाण्डुरं फुल्लपद्मदलारुणविलोललोचनं महेश्वरमिवोद्धूलितभूतिं महेश्वरमिव दिगम्बरं रामं कुमारं राजा दशरथो दृष्ट्वा हर्षपरिपूर्णहृदयः पुत्रमालिङ्ग्य सुचिरया वक्षस्यालिलिङ्गत्। अथ कुमारोऽपि पार्श्वेनाभ्याङ्कमारोप्य कलकलितलोचनो यत्किञ्चिदुवाच। धावमानमितस्ततो वीक्षमाणस्तात! गच्छे शये तात! क्रीडामि तातेत्यादि पुत्रवचनमनुभूयानुभूय निर्वृतिं ययौ। अथ कदाचिद्भोक्तुमागते राजनि रामचन्द्रो बालक्रीडासक्तहृदयो धनुःक्रीडनकरकमल उत्प्लुत्य धावमानो नरपतिपुरःस्थितमणिखचितसुवर्णभाजनस्थमन्नं वामकरेण गृहीत्वा राजनि चिक्षेप। इममपि राजा बुभुजे मुदे। अथ कदाचित्क्रीडमाने रामे वात्सल्यपरतया एतादृशान्यन्यानि चकार रामचन्द्रः।

द्रामश्च रुदन्नपतत्। एतस्मिन्नन्तरे ब्रह्मराक्षसो राममगृह्णात्। रामश्च मूर्च्छामाप।

अथ सहचरो बाल इतस्ततो रोरूयमाणो रामं तथाविधं राज्ञे व्यज्ञापयत्।

अथ राजा राममाघ्राय वशिष्ठमाह किमिदं रामस्येति। अथ वसिष्ठो भस्मा-
ऱ्याभिमन्त्र्य ब्रह्मराक्षसं मोचयामास। एवञ्च कोऽभवानिति स चाहाहं वेदाधितो
ाह्मणो बहुशः परधनमपहृत्य ब्रह्मराक्षसो जातो मे निष्कृतिं विचारय।

वशिष्ठ उवाच।

इदानीमितःपरमेकवर्षशतोपभोग्यं राक्षसत्वं नरकं भागीरथीस्नानमेकं शिवाय
वेत्यपञ्चशतं समर्प्य ततः स्नात्वा पापाद्विमुक्तो भवसीति। कदाचित्साहृतं हृतपुण्यं तव
दं प्रयच्छामि तदुपरि शिष्टां गतिं भजेति वसिष्ठवाक्यमाकर्ण्य ब्रह्मराक्षसो वसि-
ोपदिष्टपुण्यवशाद्दिव्यशरीरो भूत्वा नमस्कृत्य स्वर्गं जगाम। अथ रामं प्राप्ते काले
उपनीय वसिष्ठो वेदानध्यापयामास षडङ्गानि मीमांसाद्वयं नीतिशास्त्रं च॥ अथ
धनुर्वेदमायुर्वेदं भरतगान्धर्ववास्तुशाकुनविविधयुद्धशास्त्राणि च॥ अथ विवाहं
कर्तुंकामेन राज्ञा दशरथेन नानादेशजनपतीन्प्रतिदूताः प्रेषिताः॥ अथ कश्चिच्छीघ्र-
मागत्य राजानमिदमब्रवीत्॥ राजन्विदर्भदेशाधिपतिर्विदेहो नाम राजा॥ तस्य
पुत्री वैदेही होमलब्धा रूपेण लक्ष्मीसमा सर्वलक्षणसम्पन्ना रामयोग्या विद्यते॥
स च तां दातुं राजा रामायोद्यतः॥ तदुगम्यतां शीघ्रमिति॥ अथ वसिष्ठादीन्प्रेषया-
मास॥ ते च तत्र गत्वा तां च निरीक्ष्य लग्नं निश्चित्यायोध्यामेत्य राजा (राजान)
मुक्त्वा रामसहिताः पृथिवीपतिसमेताः शीघ्रं विविधकरितुरगशकटशिबिकान्दो-
लिकाभिरतिसुभगरूपभोगविलासक्रियानिपुणविदितविविधचेष्टागन्धर्वाः कामशास्त्र-
सुकुशला मृदुकठिनपृथुपयोधरासन्नकण्ठाः स्थूलसूक्ष्मललाटबिम्बदशनच्छदमुख-
पङ्कजाः कुटिलकुन्तलदीर्घकेशधम्मिल्लाः कनकपत्रकर्णाः स्नानचेष्टयोत्थितरोम
शोभिता जपाकुसुमसदृशना विशदविस्फुरच्छफरीलोचनाः शुक्तिकासदृश
श्रवणाः नक्षत्रसदृशस्थूलमुक्ताफलोपशोभितनासापुटा मुकुरसदृशकपोलास्तिलप्र-
सूननासिका मांसलमध्यप्रदेशचूचुका इन्द्रगोपप्रतीकाशाधरपुटदशनक्षताः समदीर्घ-

फाल्गुनमर्दनायितसर्वप्रदेशमुपनुन्नानातिमांसलाः पिण्डकाप्रविनीत्यो वलितबाहुमूला मनतिचिरकालोत्थितरोमतया हरिद्रावर्णतया च कर्णिकारदलसदृशबाहुमूला मृदुस्निग्धपर्तुलसूक्ष्ममध्यप्रदेशाः कठिनस्थूलवर्तुलासन्नानुकारस्तनाभ्यामाक्रमणस्पर्धिपयोधरकञ्चुकपट्टकपयोधरोपरि चञ्चलविविधमणिमयहारोपशोभितवक्षःस्थलाः पयोधरपरितो मध्यवर्तया तरुणतृणिपरम्परतया असमानया नाभिकूपोपरितनरोमराज्योपशोभितोदरप्रदेशामज्यमानमध्यमध्यवलीकरण एव वलीत्रयोपशोभिता सुविशालमध्याः करिकरोपमजघनप्रदेशा अरोमसदृशमृदुस्निग्धासलासमजान्वयः कदलीस्तम्भसन्निभोरुयुगला मामग्नजानुरम्याकुशवर्तुलपिण्डिकारहितजङ्घा आमग्नगुल्फा आसूक्ष्मस्निग्धा दीर्घदीर्घाङ्गुलीपादा नूपुररवाहूयमानमदना हंसमङ्गजगमनाद्दक्षिणाङ्गुष्ठास्पर्शिकच्छाग्रउपरिकच्छं नार्यो कृत्वा करद्वययुता वक्षप्रदेशकण्ठमपावृत्यापरवसनपरिभागवृतस्तनवसनापरभागे वामांस एव दक्षिणपार्श्वगतेन दशाभागेन नाभिप्रान्तेन प्रवेशितोपशोभितगात्रयष्ट्यो योषितो विवाहमङ्गलकर्णकरणायानेकशः आगच्छन् ।

बालिकाश्च विद्युल्लतांशुशोधितगात्रयष्ट्य उद्भिन्नकुचकमलकुड्मलविविधहारोपशोभिवक्षसो यत्किञ्चिद्गापिण्योऽतिचपलमृदुगतयो वृद्धवनिताश्चागच्छन् ॥

अथ विदेहपुरतः क्रोशमात्रे चूतवनिकायां विविधविटपविस्तरप्रदेशविविधविहङ्गकूजितकर्णानन्दत्तकर्णघनहरिणशावचत्यां महारजतनिर्मितोच्चभवनप्रासादोपशोभितप्रदेशविविधविहङ्गायां हेमवल्कलसंवीतमसितोद्धूलितशरीरजटिलमुनिगणध्यानोपासनोपशोभितवृक्षमालायां विविधविद्याधरवधूपयोधरभाराभिभूतविचरिततरङ्गसरसीयुतायां सरस्तीरमिलितसैरन्ध्रीयुवतिभिराहूयमानतरुणजनायां नानावर्णकुसुमसौरभवासितादोषप्रदेशायामितस्ततो रिरंसया प्रदर्शितस्फारशफरीविलोचनतरलचक्षुःप्रभाविलसितशरीरवेश्याजनायां विविधाश्चर्ययुतायां दशरथः सामात्यपुरोहितोऽभिरामरामादिपुत्रसहितः सुखमुवास ॥

अथ वैदेहोऽपि मिथिलां नानापताकोपशोभितां विविधप्रासादगोपुरोद्यानदेवता-

यतन्त्रोपशोभितामन्योन्यकेलिचतुरयुवतिजनानुकीर्णामुशीरविरचितमहाप्रपां सुकेलीजनोपशोभितविशिखां विविधपण्योपशोभितरथ्यां तत्र तत्र ब्रह्मघोषशोभितमठां प्रतिमन्दिरं मीमांसादिव्याख्यानसम्पादसीमाध्ययनां सुपुण्यहविर्गन्धसामादिस्वरपदक्रमश्रुतिब्राह्मणयाज्ञिकामनेकपरिवृढमन्दिरप्रवेशनिष्कीतागुरुकुङ्कुमाधर्यूवेषां मृदुलवसनताम्बूलरक्तदन्तच्छदकामिनीं मृदुवचनकठिनवचनकरसंज्ञाभिर्धारितप्रतिवचनविविधोपायनाहरणकरजनोपशोभितां मृदुधवलजघनपरिवीतयरुभोपरिभागेन स्निग्धवर्तुलपरस्परसङ्कर्षपयोधरमध्यप्रदेशोपशोभितवामांसकन्धापशोभितवनितां विविधमुक्ता हारजपासङ्काशशब्दमानच्छन्दमन्दहासमालाकारसहस्रोपशोभितां पुण्यास्तवसाधनमन्दिरां तत्र तत्र विचित्रतोरणां विशुद्धवीथिकां तत्र तत्र स्थापितकल्पपादपां रम्भाविभूषित द्वारां पुरीं शोभितां शोभयामास ॥

अथाभिकलनार्थं विलासिन्यो निशाचूर्णाऽक्षतमन्त्रमङ्गलकज्जलितकेशिकधम्मिल्लसाम्प्रयितजटोपशोभितसीमन्तशीर्षशोभितनासामुखविचित्राभरणार्हणहेमपात्राववस्थिताज्यगुग्गुलुफलादिसौभाग्यद्रव्यमुद्वहन्तीभिः स्त्रीभिरन्यैरपि शोभितजनैः स राजा निर्जगाम ।

तदानीं मङ्गलतूर्यघोषा देवदुन्दुभिभेरीनिसाणमर्दलशङ्खादिनादाः प्रादुर्बभूवुः । गायकाश्च मङ्गलानि जगु ॥ मङ्गलवेदवाक्यानुपाठेन वैदिका ब्राह्मणाः कुलपाठका भेरीघोषेण च कृत्स्नमाकाशमापूरयन् ॥ अथान्योन्याक्षतपूर्वमङ्गीकुर्वन्तः सूतवन्दिजनादिभिः स्तूयमानाः पुरं प्रविविशुः ॥ विदेहनगरात्पश्चिमभागे निर्मितं मन्दिरं दशरथः प्रविवेश । अथशिष्टाश्च यथा योग्यं भवनं विविशुः ॥

अथ नारदो मिथिलां तदानीमेवागच्छत् । विदेहोऽपि देवर्षिमभिपूज्य स्वागतं पृष्ट्वा भोजनं कारयित्वा सुखासीनाय मुनये सघनसारं ताम्बूलं दत्त्वा व्यज्ञापयत् ।

श्वो विवाहे भवान्स्थातुमर्हति कारयितुं विवाहम् ॥

नारद उवाच ।

श्वो हि नक्षत्रं सूर्यनक्षत्रदर्शनं तत्र विवाहो न कर्तव्य इति ।

अथ मौहूर्तिकं वृद्धगार्ग्यमाहूय राजा पप्रच्छ ॥ क विवाहमुहूर्त इति । ।
इति गार्ग्य उवाच ।

राजा च नारदं गार्ग्यं चोद्वीक्ष्य भो इदमित्थमिति पप्रच्छ ॥

अथ नारदो गार्ग्यमुवाच ।

कथमुक्तं लग्नं दास्यसि । अथ गार्ग्यो विषघटिकाश्च विहाय लग्नं दास्यामीत्युवाच

*नारदोऽपि ग्रहवचनानि किं न जानासीत्युक्तवान्गार्ग्यम् ।*

गार्ग्येण पृष्टस्तान्दोषानपठत् ॥

उल्का च ग्रहदण्डश्च मोघः कम्पस्तथैव च । सर्वकार्यविनाशाय दृष्टा वै ब्रह्मणा पुरा
प्रतिष्ठासु विवाहेषु मौञ्जीयज्ञादिषु कर्मसु । अन्येषु सर्वकार्येषु विषनाडीं विवर्जयेत् ।
अतःपरं तु कार्याणां करणे नव दोषभाक् । विवाहादिषु कार्येषु दोषमेव प्रदास्यतः ॥

*उल्का दहेत्कुलं सर्वं ग्रहदण्डो विनाशयेत् ।*
मोघस्तु मरणाय स्यात्कम्पः कम्पाय कर्मणः ॥ १७ ॥
इति नारदोक्तमाकर्ण्य गार्ग्यो मुनिर्मौनपरोऽभवत् ।
दध्यौ रविं ग्रहपतिं विहाय विषनाडीविवाहः क्रियतामिति ॥

नारद उवाच ।

कथं ग्रहवचनम् ।

सूर्य उवाच ।

देशभेदेन व्यवस्थोदिता । तदस्मिन्देशे विवाहो विषघटिकाविहाय कर्तव्य एव ।
नारदोऽप्यनुमेने । उवाच श्वः परश्वो वा शस्त्रविवाहश्च भवेदतः स्वयंवरार्थं सर्वा
आगच्छन्तु नृपाः ! दूतान्प्रेषय । अथ राजा दशरथानुमतेन सर्वानेव नृपानागमय्या-
चिन्तयत् कथं सर्वानेव तिरस्कृत्य वैदेहीं रामाय देयेति ॥

अथ रात्रौ मुहुर्निःश्वस्य निद्रालुरपि न निद्रामाप । अथ मध्येनिशं राज्ञा शुचि-
मूर्त्या त्र्यम्बकं सात्त्विकं महत्स्वप्नवृन्दधारिणं कमलमयपुरीस्थमहाकमलमुखनिरीक्ष्यते ।

षप्रमुखमुनिवरैर्हाहाप्रमुखगन्धर्वैस्तुम्बुरुप्रमुखैश्च श्रुतिस्मृतीतिहासपुराणैर्मूर्तिमद्भिश्च
द्विद्याधरादिमातृकागणैश्च नन्दीप्रमुखगणैश्च सेव्यमानपादकमलं सर्वामङ्गलपरि
कमतिपुण्यसलिलया गङ्गया निष्कलङ्केन चन्द्रमसा सेव्यमानशिरोभागं वामाङ्का-
ा गिरिजया प्रदीयमानवीटिं सहासं सकामं सहावेक्षणमाददानं गोक्षीरसदृशं
कुल्लकस्तूरिकासदृशकण्ठं मृदुसूक्ष्मस्निग्धजटाभिर्विरचितकपर्दं विशुद्धकार्तस्वर-
कलोपशोभितगण्डभागं द्विरष्टवर्षवयसं गोक्षीरसदृशस्थूलमुक्ताफलकौसुम्भवर्णा-
ावेष्टितशिरोभागं विविधरत्नविरचितकार्तस्वरभूषितवक्षः स्थलमतिधवलोप-
तोपशोभितशरीरमम्बिकानुलग्नकुङ्कुमारुणसुगन्धिशरीरमीक्षमाणं तर्जमानकाम-
ं कोटिकन्दर्पसदृशं मनसाऽचिन्तयत् ॥

अजाप शतरुद्रियं जुहाव च तेनैव कामाहुतिः प्रास्तुवच्च पुरुषसूक्तेन । अथ
ा एव महेश्वरस्तत्र प्रादुरभूत् । अथ राजा नमस्कृत्यास्तुवीत ॥

राजोवाच ।

सलिलगगनपवनदहनरविशशियजमानमूर्तिभिरष्टमूर्ते ! विश्वमूर्ते ! त्रिभुवन-
वेदपुराणमूर्ते ! यज्ञमूर्ते ! स्तोत्रमूर्ते ! शास्त्रमूर्ते ! स्वधामूर्ते ! नारायणमूर्ते !
वतामूर्ते ! त्रयीमय ! त्रयीप्रमाण ! त्रयीनेत्र ! सामप्रिय ! वसुधाराप्रिय !
प्रिय ! भक्तसुलभाभक्तविदूरस्तुतिप्रिय ! धूपप्रिय ! दीपप्रिय ! घृतक्षीरप्रिय !
करवीरप्रिय ! श्रीपत्रप्रिय ! कमलकह्लारप्रिय ! नन्द्यावर्तप्रिय ! बकुलप्रिय !
ाप्रिय ! कोकनदप्रिय ! ग्रीष्मजलावासप्रिय ! यमनियमप्रिय ! नियतेन्द्रियजप-
प्रियश्राद्धप्रिय ! गायनप्रिय ! गायत्रीप्रिय ! पञ्चब्रह्मप्रिय ! सदाचारप्रिय !
सादिकमलभवहरिहरनयनसमर्चितपादकमलजयप्रद ! हरिप्रार्थितजलोत्पा-
लप्रदर्शोत्कटस्मृतिपुष्टिप्रद ! स्मृतमङ्गलप्रद ! मृत्युञ्जय ! नमस्ते नमस्ते ।

इति स्तोत्रमाकर्ण्य भगवान्भवो राजानमुवाच वरदोऽहं वरं वृणु ।

राजोवाच ।

ीमन्मम कन्या वैदेही रामाय दित्सिता स्वयंवरे कुलरूपवलोत्साहसम्पन्नानेक-

लकुन्तलैश्चलद्भिःयूनां मनांस्याकर्षयद्भिः प्रेक्षमाणद्भ्रूविभ्रमकलैरिव स्त्रीणां चित्तमी-
मिति दर्शयद्भिरिवोपशोभितललाटानङ्गचापसुभ्रूःपद्मपत्रारुणविलोचना तिलप्रसून
मृदुस्निग्धरोमशकपोलानन्तरारक्तोष्ठा रक्तासनमाणिक्यनिभदाडिमीदशना ज-
सुमारुणाधरातिशोभितचिबुका शुक्तिकर्णा समदीर्घकण्ठाऽतिमांसलवक्षाः पीनो-
च्चकुड्मलानेकहारोपशोभिता सुभगाकारनतिमांसलबाहुलता मुग्धायतसमाना-
शिखापद्मारुणपल्लवा विविधबहुरत्नाङ्गुलिभूषणा मुष्टिग्राह्यमध्या सुरोमराजि
नाभिः पृथुजघना करिकरोरुस्तूणीरजङ्घा सुपादकमला नूपुरादिपादविभूषणा
ङ्गुलीभूषिता विकसितसौगन्धिद्धकं बिभ्रती भुञ्जानमारीचस्य पुरतश्चागता ॥
सावचिन्तयदेनां कथमपहरामि कथमालिङ्गामि कथमन्यत्किञ्चित्करोमीत्येव-
मलममानस्तूष्णीमेव विनिर्गतः ॥

ता धनुः सज्जीकरणाय यतमाना अहम्पूर्विकया विद्यमाना अन्योन्यतिरस्कारेण
प्राप धनुरुत्तमं प्राप्तद्वयात्परं नावनमयितुं शशाक। अथ सूर्यो धनुरादाय नम
निपपात। वायुर्बलवतां श्रेष्ठो अग्राह्यजगवमथ स्वेनेव करेणोत्कर्षयन्नधः
धनुश्च वायोरुपरि पपात अहसंस्तत्रा सर्वे। एतस्मिन्नन्तरे तुरगवरमारुह्य
रःसहस्रबाहुरनेकानेकशिरोभिर्दैत्यैः परिवृतः प्रह्लादसमेतो विदेहपुरीमाजगाम।
न्यविभूषणोद्भासितो दिशं कुर्वन्स्वतेजसाऽपयशसो देवताः कुर्वन्नाना-
तं अप्यद्वयङ्गुलमात्रेण शक्तो विरराम। प्रह्लादो बलिश्चैव बाणतेऽथ
। अथ राक्षसेषु तूष्णींभूतेषु राजानोऽतिबलिनः समागता उपायन्धाशक्ता
तस्थुः।

अथ ब्राह्मणाः समागताः।

अथ विश्वामित्रो धनुरादाय एकाङ्गुलपर्यन्तं सज्यं कृत्वा विरराम।

निवृत्ताश्चापरे।

अथ दिनमात्रे धनुषि तूष्णींभूतेषु राघवः सहानुजैरागत्य धनुर्निरीक्ष्याम्पृ-
राजकुमाराः शतशः समागताः। सर्वाभरणभूषितो धनुर्द्रष्टा पस्पृशुर्नत्राः-

कोपवीतीकृतदन्तशुद्धिरेकेनोपवीतेन ... ... भस्मोद्धूलितसर्वाङ्गोभसितनिपुर कायोमुक्ताफलदाममणिव्यत्यस्तरुद्राक्षमा...मुर...श्रानोऽल्पभूषणाभिभूषितसीतास हायो लक्ष्मणानुचरो विवेश वनान्तरम् । ... अनेकराक्षसांस्तस्मिन्निजघान भयानिव निखिलं चकार सीतापहरणादिनिखिलमपि ... यथा तथाऽस्याथ सुग्रीवाश्रममृ-ष्यमूकपर्वतं रामो जगाम निविडच्छायं चूतवृक्षमासाद्य लक्ष्मणसहायः परिश्रममक-ल्पयत् । वृक्षे तु धनुषी आरोप्यासीनलक्ष्मणाङ्के शिरः कृत्वा हरिचर्मशय्याशयनो लक्षितां गीतिं शृण्वन्वृक्षफलं निरीक्षमाणो वानरमेकं मणिकुण्डलं हेमपिङ्गलं सुदृढवद्धमौञ्जीकौपीनमच्छोपवीतिनमतिचञ्चलं फलमादायात्मनि विक्षिपन्तं पुष्पमञ्जरीश्च किरन्तं गानमनुकुर्वन्तं व्यजनेन रामं वीजयन्तमारुह्य शाखामपि तथा वीजयन्तमा-वद्धचूतफलमात्रं रामो वीक्ष्य लक्ष्मणमभाषत । लक्ष्मण कोऽयं कपिरिति ।

लक्ष्मणोऽपि न जाने इत्युवाच । अथ रामः समाहूय कस्य त्वं किं नामेत्य पृच्छत् । स च सुग्रीवस्य हनुमानित्युवाच ।

रामं मत्वा सुग्रीवमेत्य मत्वा देव ! नारायण इवापरः पुरुषो युवा मेघश्यामो जटी आजानुबाहुरतियशस्वी सूर्यसङ्काशेन सहापरेण इहास्ते । अथ तरुच्छायाधः संस्थितौ सर्वलक्षणसम्पन्नौ राजपुत्रौ दृष्ट्वा इतश्च ताभ्यां सुग्रीवाय निवेदयेति त्वयि निवेदितम् । अथ सुग्रीवः सत्वरमुत्थाय पुष्पसलिलादि द्रव्यमादाय पादप्रक्षा-लनादिकं कृत्वा फलानि समर्प्य व्यज्ञापयत् । कौ युवां किमर्थमागतौ राजपुत्रौ तप-स्विनाविति सुग्रीववचनमाकर्ण्य लक्ष्मणेनाभाषत रामः दशरथतनयावावां राम लक्ष्मणौ दुष्टनिग्रहशिष्टपरिपालनाय वनं गताविति । अथ सुग्रीव आह युवयोरपका-रमपरं कार्यमस्तीति लक्ष्यते । अन्यथा सेनासमेतावागमिष्यतः । लक्ष्मण आह अस्ति कार्यान्तरम् । अमुष्यभार्या केनापहृता न ज्ञायते तामन्वेष्टुमागतौ तद्देवाययोः कार्यमन्यदानुषङ्गिकम् । तदर्थमपि जलधिं तराव अपि पातालं प्रविशाव अपि नाकं साधयावः अपि महेन्द्रं पातयावः अपि वलिनं हन्वः किमपि कुर्वहे ।

सुग्रीव उवाच ।

रावणेनापहृतया कयाचिद्ध्रियमाणागतया विभूषणानि कानि चित्परित्यक्तानि तानि मया सङ्गृहीतानि तानि दर्शयामीत्याभाष्य रामं मन्दिरमागमय्य दर्शयास । रामोऽपि निरीक्ष्य निश्चित्य प्रच्छ क गतोऽसौ रावण इति पप्रच्छ स च दक्षिणामाशां गत इति बभाषे । अथ रामस्तेन सख्यमकरोत् ।

अपृच्छच्च किमर्थमिह भार्याहीनः स्थित इति ।

सुग्रीव उवाच ।

मम भ्राता वाली महाबलो मम भार्यां राज्यं चापहृत्य किष्किन्धायामास्ते युद्धे चाहं पराजितस्तद्वधाय सर्वथा मम चिन्ता यथाऽसौ त्वया निहन्यते तथाऽहमपि सागरं बद्ध्वा परतीरे लङ्कायां स्थितां सीतां रावणेनापहृतां तव समर्पयामीत्याभाष्य शपथं कृत्वा सुग्रीवो वालिनाऽतिबलिना युद्धायाहूतेन युयुधे । रामोऽप्यनन्तरमभिन्नवालिनं नाहन् ॥ अथ सुग्रीवः पलायितो राममिदमभाषत । तव विश्वसमविज्ञाय प्रवृत्तोऽहं मरणाय । रामोऽपि युवयोर्विशेषाज्ञानान्मयानुपलब्धीभूतं चिह्नितं त्वां निरीक्ष्य तं हन्मि । अथ सुग्रीवश्चिह्नं कृत्वा वालिनं युद्धायाहूय समतिष्ठत । तारा बभाषे वालिनम् ।

सहायवानिव लक्ष्यते सुग्रीवो नोचेदेवं नाह्वयति ज्ञातं मया रामलक्ष्मणौ दशरथतनयौ नारायणांशौ भूभारापहरणाय समागतौ तावस्य सहायभूतौ ।

वाल्युवाच ।

भीतिमात्रमिति मया श्रुतम् । यदि बलधर्मं विहाय दुर्बलं सहते ताहशा समाप्नोतु वा रामः प्रतिज्ञामधिकं कृत्वा विमेति धीरो यदि रामः स्वयं युद्धाय समेत्य तदा युद्धं कर्तव्यमित्याभाष्य तारां सम्भाष्य सुग्रीवयुद्धाय निर्यातः । अथ मुष्टियुद्धमन्योन्यमभूत् । रामोऽपि वालिनं जघान । पपात च वाल्याह ताराक्पुत्रं च बाणपातोऽथ शोणितसमाप्लुतो बभूव । अथ तारा चाङ्गदश्च समागत्य क्रन्दितौ बभूवतुः । अथ सर्वे वानराः समायाता वाल्युपान्ते निषेदुः रुरुदुश्च । अथ तारा

वभाषे शास्त्रकुशलाः शूराः धार्मिकाः राघवाः पुरा चापि राम ! कथं पापम-
ः । न क्षत्रधर्मं जानीषे राजगणसेवितम् ।

अन्योन्यं युद्ध्यतोर्युद्धे जयो वा मरणं भवेत् ।
अन्यो यदि तयोर्हन्याद् ब्रह्महा स निगद्यते ॥ २३ ॥
किं वैरेण वालिनमाहनः किं वानरमांसाशया ॥ २४ ॥

अभोज्यं वानरं मांसं यथात्मनोऽप्रियात्सुखाभावादपरेषामपि तथाभावं मन्यसे अहो विमोहाद्यदि मामादातुमिदं कृतमेकपत्नीव्रतं तव । यदि रावणहृतां सीतामानेतुं सुग्रीवसहायाय कृतमेवमेवहामहदन्तरं वलयुद्धेन महाबलेन वालिना सद्भावेन दिनकरावर्तितान्तरे सीतामानेतुं समर्थेन स्मरणागतरावणदानसमर्थेन वानर-राजेन पञ्चाशत्परार्द्धवानरभल्लूकसेनावता आत्मकार्येण सिध्यत इति किं सुग्रीवेणा-ल्पवीर्येण सप्तपरार्द्धसेनापतिना कपिना किं सिध्यति कार्यं वचनवतः । अहो ज्ञातं सर्वत्रैव भद्रं यदुक्तोऽसि । वक्ति च रामः पृथिवीपतिना मया दुष्टनिग्रहणं कार्यं शिष्ट-परिपालनं च वालिना सुग्रीवमहिषी रुमाऽपहृता राज्यं च अतश्च न तद्वधे दोषः ।

तारोवाच ।

सुग्रीवोऽपि तर्हि वध्यो दुन्दुभिना युध्यता वालिना बिले प्रविष्टेन वत्सरं तद्योषितं तदन्तरे च मामपहृत्य राज्यं च कृतं सुग्रीवेण तं पूर्वमपि पश्चात्तं हन्तु ।

राम उवाच ।

कियत्कालात्पूर्वमिदं च वद ।

तारोवाच ।

षष्टिवर्षसहस्रादर्वागशीतितमे वर्षे रक्षोयुद्धे सुग्रीवेण राज्यमपहृतम् । पुनश्च वर्षान्तरे प्राप्तेन वालिना सुग्रीवः पलायितः । अपहृता तस्य भार्या राज्यं चापहृतम् तस्मिन्नेव दिने भवतः पितुर्दशरथस्याभिषेकः ।

राघव उवाच ।

मया पितुरनुशासनाद्राज्यगतदुष्टनिग्रहणं कृतम् । गुरुवचनस्यानुल्लङ्घनीय-

त्वात्तत्पदरणपेजायां यो राजा स नाचरत् । अथवा स्वतन्त्री मृगी मृगयोर्हतश्च वाली मृगाणामन्योन्यशरणायजुगुप्सा च । यतो मम मृगयावदयवा मृगाणाम् ।
चलितस्थितयद्वानां चलद्भ्रान्तयन्शायिनाम् । अथावगूजतासङ्गमुन्क्रिताम्मृगया तथा मृगया शास्त्रविहितो मृगयेयं मया कृता । दर्शनादर्शनाभ्यां च धावता धावता तथा

अपरोहात्परं स्थानं सात्त्विकानां प्रमिद्यते ।
राज्ञश्च मृगया धर्मो विना मामिषभोजनम् ॥ २६ ॥

अथ रामवचनमाकर्ण्य एव प्राकम्पयम्छिरांसि । वाली वभावे राममञ्जलिं मस्तके निधाय नमस्ते राम ! शृणु वचनं मम ।

शङ्खचक्रगदापाणिः पीतवासा जगद्गुरुः । नारायणःस्वयं साक्षात्त्वमिति मया श्रुतम्

त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च यज्विनः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृत् ॥ २८ ॥

मरणे चिन्तमानस्य त्वां विमुक्तिरदूरतः । स त्वं मे दर्शनं प्राप्तो राम ! मे पापसंशयः

गृहाण बाणं काकुत्स्थ व्यथितो भृशमस्म्यहम् ॥ ३० ॥

अथ रामस्तथेति बाणमादाय वालिनमुवाच किमिदं दीयतां वद ।

कपिरुवाच ।

यदि प्रसन्नो भगवान्मम सद्गतिं देहि । अयं सुग्रीवस्तथा त्वत्सर्योऽङ्गदोऽस्य तारा च मया पापिनाऽपराधः कृतस्तत्फलमनुभूतम् । अथ रामं पश्यन्नेव वाली ममार स्वर्गं ■ गतः । अथ सुग्रीवं राज्येऽभिषिच्य स्वयं वनं विवेश । अथ तेन सहायेन जलधिसमीपं गत्वा क लङ्का क सीता क वारातिरिति सुग्रीवमाह रामः । अथ हनुमानाह प्रविश्य लङ्कां विचित्य सीतां सर्वतस्त्वमवगत्य युद्धं सन्धिर्वा कर्तव्यस्तदुदधिलङ्घनाय कश्चित्समादिशतु भगवान् । अथ सुग्रीवमाह रामः । कथमेतद् घटत इति ।

कपिरुवाच ।

मम वानरा भल्लूकप्रमुखाः कोटिशः सन्ति । एकं नियुज्य सर्वमाकलय्य

यथायुक्तं तथा करणीयम् । अथ जाम्बवानाह । हनुमानेको गच्छतु बुध्यतु लङ्काम् । अथ हनुमानगमल्लङ्कापुरं विचित्य । सीतामशोकवनिकायामासीनां तथा सम्भाष्य । विश्वासं कृत्वा वनं बभञ्ज वनरक्षकांश्च । बद्धो रक्षसा लङ्कां दग्ध्वा उत्तरकूलं गत्वा रामं दृष्ट्वा वृत्तान्तं कथयित्वा तूष्णीमतिष्ठत् ।

अथ रामः सर्वं विचारयामास जाम्बवानुवाच रामेण लङ्का कपिभिर्विनश्यतीति रुद्रेण ममोक्तम् । अथ सागरोत्तरणे यत्न आस्थेय । अथ रामः शङ्करमाराध्य सर्वं निवेदयित्वा स्वयुक्तं करोमीति वचनमुक्त्वा शिवमभ्यर्च्य प्रणतोभूम्यां व्यजिज्ञपत् । महादेव ! महाभूतवास ! महाप्रलयकारण ! महाहिभूषण ! महारुद्र ! शङ्कर ! परमेश्वर ! विरूपाक्ष ! नागयज्ञोपवीत ! करिकृत्तिवसन ! ब्रह्मशिरः ! कपालमालाभर-भूषण ! नरकास्थिभूषण ! भसितधर ! नारायणप्रिय ! शुभचरित ! पद्मजादिदेव ! पञ्चानन ! चतुर्वदन ! वेदवेद्य ! भक्तसुलभाभक्तदुर्लभ ! परमानन्दविज्ञान ! पर-पूषदन्तपातन ! दक्षशिरश्छेदन ! ब्रह्मपञ्चमशिरोहरण ! पार्वतीवल्लभ ! नारदोपगीय-मानशुभचरित ! शर्व ! त्रिनेत्र ! त्रिशूलधर ! पिनाकपाणे ! कपर्दिन्नेकरूपधर ! वृष-भवाहन ! शुद्धस्फटिकसङ्काश ! चतुर्भुज ! नानायुध ! दक्षिणामूर्ते ! ईश्वर ! देवपते ! गङ्गाधर ! त्रिपुरहर ! श्रीशैलनिवास ! काशीनाथ ! केदारेश्वर ! भुवनसिद्धेश्वर ! गोकर्णेश्वर ! कनखलेश्वर ! पर्वतेश्वर ! वरप्रद ! वाञ्छितदायक ! पुरन्दरपूजित-चरणकमल ! सोम ! सोमभूषण ! सर्वज्ञ ! ज्योतिर्मय ! जगन्मय ! नमस्ते नमस्ते । एवं स्तुवतो रामस्य पुरतो लिङ्गमध्यतो ज्योतिर्मयमूर्तिराविर्बभूव । भगवानथ पुनः पद्मासनासीनमुमाधिष्ठितवामाङ्कमामुक्तसर्वाभरणं सुकान्तिकिरीटिनं हैमवती-कटितटं कन्दर्पनामधरपदं तरङ्गितानेकदिशाभिः पूर्णनेत्राञ्चितं हास्यमुखं प्रसन्नवदनं ददर्श रामः । परमेशितारं ननाम बद्धाञ्जलिः पुनश्च दण्डवत्प्रणाम । अथ रामं परमेश्वरोऽपि वरं वृणु त्वं वरदोऽहमित्युक्तवान् ।

राम उवाच ।

लङ्कां गमिष्यामि समुद्रतरणे उपायदेशं मम देहि शम्भो ! ॥

अतिकाय उवाच ।

निश्चितमिदंपुरास्माभिः कार्यं सेनां विभागशः कृत्वा विद्युन्माली नाम राक्षसो महाबलो विचित्रयोधी दर्शनादर्शनयोधी वानरैः सर्वैरेक एव युध्यते । अपरे च बलिनो महान्तःशिक्षितास्त्राश्चागता आवां च युवाभ्यां युध्यावो रावणः पुष्पकमारुह्यापरभागेन त्वामेवनिहनिष्यति । अन्ये राक्षसाः कुम्भकर्णमुखाश्चात्मरूपं कृत्वा त्वां परिवार्य गृहीत्वा सीतायै दर्शयित्वा तत्सन्निधावेव हनिष्यन्ति । रामः प्राह अहो बलवतां किमसाध्यमेवं भवति दैवगतिः कुटिला । सुग्रीवोऽतिकोपनः सक्रोधं दृष्ट्वा राममुवाच । वध्यावेतौ न मोचनीयौ । रामः प्राहावध्यौ मोचनीयावेतौ वस्त्राणि भूरणान्यानयेत्युक्तमात्रे हनूमता तान्यानीतानिरामस्ताभ्यां दत्तवान् तत्रायदेसहस्रद्वारे दृश्यते दारुपञ्चयवन्त्रं शुकेणोक्तमेतेन छिन्नेन रावणो हन्यते । अथ च दारुच्छेदनसमनन्तरं पातालं गन्तव्यमिति भार्गवभाषितं शासनं लिखितम् । तस्मात्वमिदं दार्येकप्रयत्नैकबाणनिपातेन पञ्चधाच्छिन्धि ततस्तव शक्तिं ज्ञात्वा युद्धमति दृढं कुर्वीमहि । अथ भार्गववचो विज्ञाय रामःपूर्वं कोट्यां स्पर्शमात्रेण सज्यं कृत्वा धनुषि बाणं संयोज्य रक्षोभ्यां हनूमतश्चावयन्नेव बाणं मुमोच ।

बाणं धनुषश्च्युतं तौ राक्षसौ बाणमार्गं निरीक्षमाणौ दारुबाणेन पञ्चधाछिन्नंनिरीक्ष्य रामं व्यज्ञापयतामावयोः शिरसी रक्षणीयास्त्वयेति तथेत्याह रामः ।

